# थोड़ा खेलें, थोड़ा डराएं.



अब आपके मनपसंद रसना के 11 फ़्लेवर्स का दुगुना स्वाद लीजिए. रसना सॉफ़्ट ड्रिंक कॉन्सन्ट्रेट के स्टॅन्डर्ड पॅक्स पर छपे रसना डायनो गेम के पांच कूपन अदा करने पर आपको एक रोमांचक डायनो स्केर गेम फ़्री मिलेगा. अब आप कहते ही रहेंगे 'आय लव यू रसना'.

- रसना स्टॅन्डर्ड पॅक्स इंस ऑफ़र के बिना भी उपलब्ध.
- यह ऑफ़र केवल 31 अगस्त 1996 तक लागू रहेगी.




Mudra:EAMR:9266 Hin.




# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'

## वृत्ताकारके रन्ध्रे चतुरस्राकारकस्य पिधानस्य योजनम्

गतेषु पञ्चाशद्(५०)वर्षेषु भारते ये ये सर्वकाराः शासनं कृतवन्तः ते सर्वेऽपि नूतनानां विद्यालय-महाविद्यालयानाम् आरम्भणेन, विश्वविद्यालयानाम् आयोजनेन च शिक्षणसौलभ्यानि विस्तारयितुं प्रयत्नं कृतवन्तः । छात्राः उद्योगावकाशान् प्राप्नुयुः इति उद्देशेन ते विविधान् नूतनविषयान् पाठ्यक्रमे योजितवन्तः च ।

किन्तु दौर्भाग्यं नाम एतादृशात् प्रयत्नात् उद्योगावकाशाः प्रयत्नानुगुणं नैव वर्धिताः । प्रत्युत विद्यावन्निरुद्योगिसमस्यायाः भारात् देशः नितरां जर्झरितः जातः । अन्यदेशेषु अपि एतादृश्यः समस्याः सन्ति इति तु सत्यम् एव । अमेरिकादेशादयः एतस्य उदाहरणानि । किन्तु वैलक्षण्यं नाम तत्र अप्राप्तोद्योगाः विद्यावन्तः युवकाः प्रतिदिनं डालर्मितं निरुद्योगवेतनं प्राप्नुवन्ति । तच्च निरुद्योगवेतनं ते स्वस्य कार्यानेन गत्वा स्वीकृत्य आगच्छन्ति इति तु तत्रत्यः विशेषः ।

कस्मिंश्चित् सम्मेलने अत्यन्तम् अर्थपूर्णः कश्चन प्रश्नः केनचित् पृष्टः - 'शिक्षकप्रशिक्षणं प्राप्तवान् अपि कश्चित् उद्योगप्रतीक्षायां किं स्वस्य कालं व्यर्थं यापयितुम् अर्हति ?' इति । किं सः परिस्थितिम् अवगत्य, स्वमार्गं परिवर्त्य, अन्यं कञ्चित् योग्यम् उद्योगं प्राप्तुम् आत्मनः सज्जीकरणं चिन्तयितुं न शक्नुयात् ?

एषः स्वोद्योगस्य कालः । उद्योगाकाङ्क्षिभिः स्वनिमित्तं स्वयमेव उद्योगावकाशः स्रष्टव्यः अस्ति । ये स्वशिक्षणं समापितवन्तः सन्तः इतोऽप्यधिकं शिक्षणं प्राप्तुं न इच्छन्ति, तैः स्वोद्योगस्य आरम्भस्य विषये गभीरं चिन्तनं करणीयम् अस्ति । योग्यरीत्या तक्षणेन चतुरस्राकारकं पिधानम् अपि वृत्ताकारके रन्ध्रे योजयितुं शक्यते एव ।



सम्पुटः - १३ मे - १९९६ सञ्चिका - २

प्रतिकृतिमूल्यं रू. ५-०० * वार्षिकं ग्राहकशुल्कं रू. ६०-००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अकिञ्चनः - Poor
अङ्गविकलः - Physically handicapped
उत्कण्ठा - Anxiety
उन्नयनम् - Lifting
उपसेचनम् - Chutney
कनीयान् - Younger
कशेरुकम् - Backbone
कारवेल्लम् - Bitter gourd
किंवदन्ती - Rumour
क्षारजलम् - Salt water
खनिः - Mine
गाथा - Epic poem
गोपनम् - To keep concealed
जागर्ति - Vigilance
ताटङ्कः - Ear ring
तिक्तम् - Bitter
तीर्त्वा - Having crossed
त्सरुः - Hilt
दुष्प्रवेश्यम् - Impregnable
निकषस्थानम् - Touchstone
निम्बपर्णम् - Neem leaf
निश्रेणिः - Ladder
नौदण्डः - Oar
न्यञ्चनम् - Turning
पणीकृत्य - Having offered as a bet
पल्लविताः - With sprouts pushed out
पाचकः - Cook
पुलाकः - Cooked rice granules
मार्गभ्रष्टः - One who has lost the way
मृगया - Hunt
यवागूः - Gruel
लिपिकारः - Clerk
वराहः - Pig
विमाता - Stepmother
वृद्धिः - Interest
वृन्तम् - Stalk
सकृत् - Once
सन्धिः - Agreement
समाविष्टाः - Occupied
सामञ्जस्यम् - Suitability

वार्ताविशेषः -

# प्यालस्तीनायाः अध्यक्षः

'अरब्'प्रदेशे स्थितः लघुप्रदेशः प्यालस्तीना । यासर्-अराफत्महोदयः तस्य देशस्य प्रथमाध्यक्षरूपेण निर्वाचितः अस्ति । जनवरी-मासस्य २० तमे दिनाङ्के प्रवृत्ते निर्वाचने ८८ सदस्यात्मिका संसदीयसमितिः अपि रचिता । तत्र अराफत्-अलीमहोदयस्य नेतृत्वेन युक्तस्य 'फताह'पक्षस्य बहुमतम् आसीत् । अराफत्-महोदयस्य पूर्णं नाम अब्दुल् रेहमान् अराफत् अल्कुद्वाय् । १९४८ तमे वर्षे इस्रेल्देशेन स्वातन्त्र्यं प्राप्तम् । तदा प्यालस्तीनाजनाः मातृभूमितः बहिष्कृताः अभवन् । तदा अराफत्महोदयः कैरोविश्वविद्यालये तान्त्रिकशिक्षणं प्राप्नुवन् आसीत् । विंशतिवर्षीयः युवकः आसीत् सः । स्वजनानां विषये प्रवर्तमानम् अन्याय्यं द्रष्टुम् अशक्तः अभवत् सः । 'अरब्राष्ट्रियता' तस्मिन् विशेषपरिणामम् अजनयत् । अतः सः तान्त्रिकशिक्षणं परित्यज्य 'स्वजनानां काचित् मातृभूमिः कल्पनीया' इत्येतेन सङ्कल्पेन प्यालस्तीना-विमोचना-संस्थाम् (पि.एल्.ओ.) आरब्धवान् । किञ्चित्कालानन्तरं तस्याः संस्थायाः अध्यक्षः अभवत् सः ।



आरम्भे सः इस्रेल् देशस्य दुराक्रमणकारिणाम् उपरि कूटयुद्धतन्त्रेण आक्रमणम् आरब्धवान् । एतेन 'अतिदारुणः उग्रवादी' इति सः प्रसिद्धः अभवत् । अनन्तरम् इस्रेल्सैन्येन सह प्रत्यक्षयुद्धं कृत्वा सः किञ्चित्प्रमाणेन विजयम् अपि साधितवान् । एषा घटना प्यालस्तीनाजनानाम् अभिमानस्य कारणम् अभवत् । ऐक्यराज्यसमित्या प्यालस्तीनाप्रदेशः 'आब्सर्वर्'रूपेण अङ्गीकृतः । १९७४ तमे वर्षे ऐक्यराज्यसमित्याः 'जनरल्-असेम्ब्ली' मध्ये अराफत्महोदयेन उपन्यासः कृतः । तदा तस्य हस्ते शान्तेः चिह्नभूता एका वृक्षशाखा आसीत् । तां प्रदर्श्य 'एषा शान्तिसूचिका शाखा मम हस्तात् च्युता यथा न भवेत् तथा आचरन्तु' इति सः सभासदः प्रार्थितवान् ।

किन्तु पि.एल्.ओ - इस्रेलयोः मध्ये परस्परावगमनं न आसीत् इति कारणतः युद्धम् अनुवृत्तम् अभवत् । उभयपक्षेण अपि स्वविजयः घोषितः । उभाभ्यां देशाभ्यां पराजयोऽपि अङ्गीकृतः । ततः परस्परचर्चया कांश्चन अंशान् उभयपक्षीयाः अपि अङ्गीकृतवन्तः । तदाधारेण अराफत्महोदयः १९८८ तमे वर्षे ऐक्यराज्य-समित्यां इस्रेल्देशस्य योजनम् अङ्गीकृतवान् । अतः सर्वेऽपि तं 'प्रज्ञावान् पुरुषः' इति श्लाघितवन्तः ।

१९९३ तमे वर्षे 'प्यालस्तीना अथारिटी' आरब्धा । पि.एल्.ओ.-नायकाः इस्रेल्नायकाः च सन्धिविषये परस्परं चर्चितवन्तः ।

१९९५ तमे वर्षे सप्टम्बर् २९ दिनाङ्के इस्रेल्-विदेशाङ्गसचिवेन सैसन् फेरिजवर्येण अराफत्महोदयेन च सन्धिपत्रे हस्ताक्षरं कृतम् ।

पश्चिमतीरस्य 'गाजास्ट्रिप्'-प्रदेशात् अन्येभ्यः आक्रमित-प्रदेशेभ्यः च इस्रेल्जनाः प्रति-गतवन्तः । प्यालस्तीनीयाः तं प्रदेशम् आक्रान्तवन्तः । तत्र प्रजाप्रभुत्वस्य अभिवर्धनार्थं जनवरीमासे निर्वाचनं कृतम् ।

प्यालस्तीनाप्रदेशः अत्यन्तं प्राचीनः । पश्चिमतीरस्थे जेरिकोलोनगरे ९००० वर्षेभ्यः पूर्वं मानवैः ऐदम्प्राथम्येन वासः आरब्धः इत्यत्र ऐतिहासिकाः आधाराः सन्ति ।

सद्यःकाले प्रचलिते निर्वाचने अराफत्-महोदयस्य प्रतिस्पर्धिरूपेण एकसप्ततिवर्षीया श्रीमती समीह खलीलनामिका काचित् महिला आसीत् । सा दशप्रतिशतम् (१०%) मतानि प्राप्तवती । अराफत्महोदयः ८८ प्रतिशतं मतानि प्राप्तवान् ।

पि.एल्.ओ.-इस्रेलयोः सन्धानकारणे इजिप्ट्-देशेन महत्तरपात्रं निरूढम् । 'स्वतन्त्रप्यालस्तीना-निर्माणे सद्यःकाले प्रवृत्तं निर्वाचनं महत् पात्रं वहति' इति ईजिप्ट्नायकानाम् अभिप्रायः अस्ति ।



# कनकराजस्य प्रयाणम्

कनकराजः नाम कश्चित् कमलापुरम् आगतवान् । आगमनसमये सः अकिञ्चनः आसीत् । ग्रामाधिकारिणा मिलित्वा आश्रयं प्रार्थितवान् सः । ग्रामाधिकारी भूस्वामिनः जयरामस्य रिक्तं गृहं तस्मै दापितवान् । कनकराजः चतुरः मासान् यावत् कष्टेन धनं सम्पादितवान् । अनन्तरं सः भूस्वामिनः जयरामस्य गृहं गत्वा - ''स्वामिन्, भवतः गृहं मम उत्तमम् आश्रयस्थानम् आसीत् । किन्तु भाटकं विना तस्मिन् गृहे वासं कर्तुं मम सङ्कोचः भवति । अतः यस्यकस्यचित् वा कार्यस्य निमित्तं मां भवान् आह्वयतु । अहं तत् कार्यं कृत्वा गच्छामि'' इति उक्तवान् ।

तदा जयरामः हसन् - ''मम अनुजः विवाहोत्तरं पृथग्वासकरणम् इच्छेत् इति मत्त्वा तत् गृहं क्रीतवान् आसम् । किन्तु सः इदानीं नगरे वसति । गृहं तु रिक्तम् अस्ति । यदि केऽपि तत्र न वसन्ति तर्हि तस्य सुव्यवस्थारक्षणार्थं महान् व्ययः करणीयः भवेत् । भवान् तत्र वसति इति कारणतः सः व्ययः इदानीं न भवति मम । तदेव भाटकम् इति अहं चिन्तयामि । भवान् सङ्कोचेन विना तत्र तिष्ठतु'' इति उक्तवान् ।

''न । अहं तथा न चिन्तयामि । भाटकं मम नाम्ना ऋणरूपेण भवतु । उत्तमः कालः यदा आगमिष्यति तदा तत् ऋणं प्रत्यर्पयिष्यामि'' इति जयरामम् उक्तवान् कनकराजः । अनन्तरं सर्वत्र गत्वा 'कार्यम् अस्ति वा ?' इति ग्रामीणान् पृष्टवान् च ।

एकत्र सीतारामः नाम कश्चित् कविः आसीत् । सः कनकराजम् उद्दिश्य - ''अहं कश्चन कविः । काव्यानि लिखित्वा सहृदयेभ्यः समर्पयामि । प्रतिफलरूपेण ते धनं यच्छन्ति । अतः मम जीवनं सुखेन यापितं भवति । मम पत्न्याः साहाय्यार्थं

काचित् कर्मकरी अस्ति । अतः अत्र अन्यत् किमपि कार्यं नास्ति । अन्यथा मा चिन्तयतु'' इति उक्तवान् ।

तदा कनकराजः - ''स्वामिन्, भवतः गृहं विशालम् अस्ति । प्राङ्गणम् अपि विशालम् अस्ति । यदि भवान् अवकाशं कल्पयति तर्हि वाटिकायां विद्यमानं कदलीवनम् अहं पालयिष्यामि । मास्तु इति मा वदतु । भवान् यदि उद्योगं न ददाति तर्हि प्राणधारणार्थं मम आधारः एव न भवति'' इति उक्तवान् ।

सीतारामः आश्चर्येण कनकराजं दृष्टवान् । 'दर्शनेन तु ज्ञायते यत् एषः विद्यावान् इति । कर्मकरः इव तु सर्वथा न दृश्यते एषः । अनिवार्यकारणैः एतेन कार्यान्वेषणं करणीयम् आपतितं स्यात् इति भाति' इति चिन्तयन् सः तम् उद्दिश्य - ''वाटिकायाः पालनादिकं अहं स्वयम् एव करोमि । यतः तेन एव शरीरस्य व्यायामः भवति । तावत् अपि न करोमि चेत् मम आरोग्यं नश्येत् खलु । भवतु, भवान् निराशः मा भवतु । यावत् उद्योगः न लभ्यते तावत् मम गृहे एव भोजनं करोतु । देवकृपया भोजनस्य तु अभावः नास्ति मम गृहे'' इति उक्तवान् ।

तदा कनकराजः - ''भवता मम विषये यः अभिमानः प्रदर्शितः तदर्थं कृतज्ञः अस्मि । वृथा अन्येषां गृहे भोजनकरणस्य अभ्यासः मम नास्ति । मयि विश्वासः अस्ति चेत् यदा अहं प्रार्थयामि तदा मह्यं भवान्



ऋणं यच्छतु । यदा सामर्थ्यं प्राप्स्यामि तदा प्रत्यर्पयिष्यामि'' इति उक्त्वा ततः निर्गतवान् ।

अग्रिमं गृहं कस्यचित् वणिजः आसीत् । सः अपि यथा सीतारामः उक्तवान् तथैव 'कार्यं नास्ति' इति उक्तवान् । कनकराजः अपि यथा सीतारामम् उक्तवान् आसीत् तथैव उक्त्वा ततः अग्रे गतवान् ।

एवमेव बहुत्र अटनानन्तरमपि कुत्रापि उद्योगं न प्राप्तवान् सः । श्रान्त्या कस्यचित् वृक्षस्य अधः गत्वा उपविष्टवान् सः । तदा तेन मार्गेण गच्छन् ग्रामाधिकारी तं दृष्ट्वा - ''किं भोः, उद्योगः प्राप्तः वा ?'' इति पृष्टवान् ।

''स्वामिन्, यद्यपि भवतः ग्रामः



विशालः अस्ति, तथापि सर्वे स्वकार्यं स्वयं निर्वहन्ति इति कारणतः मया उद्योगस्तु न प्राप्तः'' इति वदन् कनकराजः प्रवृत्तं सर्वं निवेदितवान् ।

तदा ग्रामाधिकारी हसन् - ''प्रतिदिनम् एकैकत्र भवान् भोजनं करोतु । तेन भवतः समस्या एव परिहृता भविष्यति'' इति उक्तवान् ।

''प्रतिफलदानं विना भोजनकरणं मह्यं सर्वथा न रोचते । दीर्घकालम् अपि भोजनं विना स्थातुं मम सामर्थ्यम् अस्ति एव'' इति उक्तवान् कनकराजः ।

तदा आश्चर्यचकितः ग्रामाधिकारी कनकराजं परीक्षादृष्ट्या दृष्टवान् । दर्शनेन कनकराजः सामान्यः इव न अभासत । 'एतादृशस्य विषये ग्रामजनैः आदरः प्रदर्शनीयः' इति चिन्तयन् सः ग्रामाधिकारी सर्वान् ग्रामीणान् मेलयित्वा - ''एषः कनकराजः स्वाभिमानी पुरुषः । एषः प्रतिफलरहितं दानं स्वीकर्तुं न इच्छति । अतः अस्माभिः सर्वैः सम्भूय एतस्य साहाय्यं करणीयम् । सम्पादनस्य अभावत् एषः कष्टम् अनुभवन् अस्ति । अतः प्रतिदिनम् एकैकेन एतस्मै कार्यं भोजनं च दातव्यम्'' इति उक्तवान् ।

एषः विषयः सर्वैः अपि अङ्गीकृतः । एवं कनकराजः उद्योगं प्राप्तवान् । आहारस्य अभावः नास्ति इति कारणतः तस्य दिनानि सुखेन यापितानि भवन्ति स्म । तथाऽपि कनकराजस्य तृप्तिः न आसीत् । प्रतिदिनं कस्यचित् सकाशात् सः ऋणं स्वीकरोति स्म । केषाञ्चन सकाशात् एकं नाणकं, पुनः केषाञ्चन सकाशात् नाणकद्वयम्, पुनः अन्यस्मात् नाणकत्रयं च स्वीकरोति स्म । एवं सर्वेभ्यः धनं स्वीकुर्वन् सः 'यदा उत्तमकालः भविष्यति तदा प्रत्यर्पयिष्यामि' इति वदति स्म । प्रत्यर्पणदिनस्य उल्लेखम् एव न करोति स्म । आश्चर्यं नाम 'ऋणं प्रत्यर्पयतु' इति केनापि न उक्तमेव । एवम् एकं वर्षम् अतीतम् ।

कदाचित् कनकराजः ग्रामाधिकारिणा मिलित्वा - ''अहं स्वग्रामं गन्तुम् इच्छामि । ग्रामीणान् सर्वान् भवान् मेलयतु । यः यत् इच्छति तत् तस्मै आनीय दास्यामि'' इति उक्तवान् ।

ग्रामाधिकारी हसन् - "भवान् किम् आनेतुं शक्नोति ?" इति पृष्टवान् ।

"मम ग्रामे ललिताम्बानामिका काचित् महिमवती देवता अस्ति । सर्वविधाः अपेक्षाः अपि पूरयितुं समर्था अस्ति सा" इति उक्तवान् कनकराजः ।

"कः सः ग्रामः भवतः ? भवता सह अहम् अपि आगमिष्यामि । यतः स्वयं वक्तुं योग्या काचित् अपेक्षा अस्ति मम" इति उक्तवान् ग्रामाधिकारी ।

"तं ग्रामं गन्तुं कोऽपि न शक्नोति । तत्र वसन्तीं ताम् अन्ये केऽपि द्रष्टुं न शक्नुवन्ति अपि । अतः भवान् स्वस्य अपेक्षां मां वदतु तावत् । भवतः प्रतिनिधिः सन् ललिताम्बाम् अहं प्रार्थयिष्यामि" इति उक्तवान् कनकराजः ।

तदा ग्रामाधिकारी - "मम विवाहानन्तरं सप्तदश(१७) वर्षाणि अतीतानि । तथापि मम सन्ततिः नास्ति । ग्रामाधिकारिणं सन्तत्या अनुगृह्णातु इति ललिताम्बां प्रार्थयतु भवान् । भवतः प्रार्थनया सा किं माम् अनुगृह्णीयात् ?" इति सम्भ्रमेण पृष्टवान् ।

"अवश्यम् अनुग्रहीष्यति सा" इति उक्तवान् कनकराजः ।

अनुक्षणं ग्रामाधिकारी सडिण्डिमं घोषणं कारितवान् यत् - कनकराजः स्वग्रामं गमिष्यति । अतः सर्वैः सायं समावेष्टव्यम् इति । तदनुगुणं सर्वे समाविष्टाः । तदा कनकराजः तान् उद्दिश्य - "देवस्य



अस्तित्वस्य विषये बहूनां सन्देहः स्यात् नाम । तथापि देवः तु निश्चयेन अस्ति एव । सः उत्तमकार्यविषये जनान् प्रोत्साहयति । दुष्टानां संहारं च करोति इत्यत्र मम दृढविश्वासः अस्ति । भवन्तः स्वापेक्षाः वदन्तु । ताः अहं ललिताम्बां सर्वं निवेदयिष्यामि" इति उक्तवान् ।

ग्रामीणाः सर्वे अहमहमिकया स्वापेक्षाः उक्तवन्तः । कश्चित् 'मम माता दीर्घकालीनात् अस्वास्थ्यात् मुक्ता भवतु' इति, काचित् 'शीघ्रकोपी मम पतिः शान्तमूर्तिः भवतु' इति, अन्ये केचन ग्रामसम्बद्धाः अपेक्षाः च सूचितवन्तः ।

तस्मिन् ग्रामे कूपाः क्षारजलयुक्ताः आसन् । मधुरजलप्राप्त्यर्थं ग्रामीणैः सुदूरं



गन्तव्यम् आसीत् । ग्रामे कूपाः मधुरजलयुक्ताः भवेयुः इति केचन सूचितवन्तः । 'मार्गपार्श्वे वृक्षाः न वर्धन्ते । अतः छायादातारः वृक्षाः वर्धेरन्' इति केचन प्रार्थितवन्तः ।

तस्य ग्रामस्य रामालयः शिथिलावस्थायाम् आसीत् । देवशिल्पिनं विहाय अन्ये केऽपि तं देवालयं समीकर्तुं न शक्नुवन्ति स्म । देवालयस्य नाशः यदि भविष्यति तर्हि अशुभकरम् इति केषाञ्चन भावना । अतः केचन 'आलयस्य जीर्णोद्धारः भवेत्' इति प्रार्थितवन्तः ।

एवंरीत्या बहवः स्वापेक्षाणां कथने निरताः आसन् । तदा तत्र कश्चित् दृढकायः कृष्णवर्णीयः उन्नतः पुरुषः आगतवान् । कनकराजं दृष्ट्वा सः - "एवं तर्हि भवान् अत्र अस्ति वा ?" इति पृष्टवान् ।

ग्रामाधिकारी तम् आहूय सम्भाषणं कृतवान् । तदा सः आगन्तुकः उक्तवान् - "मम नाम नीलः इति । अहं चन्द्रपुरीयः । एषः कनकराजः गतवर्षे मम ग्रामे आसीत् । तत्काले एतेन मद्ग्रामीणेभ्यः सर्वेभ्यः ऋणं स्वीकृतम् । वर्षान्ते 'ललिताम्बिकायाः समीपं गत्वा सर्वेषाम् अपेक्षाः तां निवेद्य, सर्वे तस्याः अनुग्रहं यथा प्राप्नुयुः तथा करिष्यामि' इति उक्त्वा ततः प्रस्थितवान् । किन्तु मद्ग्रामीणाः एतद्विषये सन्देहं प्राप्य - 'ऋणं प्रत्यर्प्य एव गच्छतु' इति सानुरोधम् उक्तवन्तः । अतः एषः कमपि अनुक्त्वा मम ग्रामात् पलाय्य अत्र आगतवान् अस्ति । एतम् अन्वेष्टुम् एव मां नियोजितवन्तः सन्ति मद्ग्रामीणाः । एतं सर्वत्र अन्विष्यन् अत्र आगतवान् अस्मि" इति ।

"नीलेन उक्तं सत्यं वा ?" इति कनकराजं पृष्टवान् ग्रामाधिकारी । तदा शिरश्चालनपूर्वकम् अङ्गीकारं सूचितवान् कनकराजः ।

"किमर्थं तथा कृतवान् भवान् ?" इति पृष्टवान् ग्रामाधिकारी ।

तदा कनकराजः उक्तवान् - "अहं ललिताम्बायाः भक्तः । सज्जनानां अपेक्षाः पूरणीयाः इति विचिन्त्य रङ्गपुरं गतवान् आसम् । अत्र यथा आचरितवान् तथैव वर्षं यावत् तत्रापि आसम् । तत्र अहम् ऋणरूपेण त्रिसहस्रं रूप्यकाणि

सङ्गृहीतवान् । ग्रामस्थानाम् अपेक्षा-पूरणार्थं स्वग्रामं गन्तुम् उद्युक्तः च । किन्तु 'ऋणं प्रत्यर्प्य एव गच्छतु' इति तत्रत्याः अनुरोधं कृतवन्तः । अतः ऋणं प्रत्यर्प्य एव गन्तव्यम् इति अहं चिन्तितवान् । धनं सर्वं कुत्रचित् गोपयित्वा स्थापितवान् आसम् । किन्तु दौर्भाग्यवशात् केनापि तत् धनं चोरितम् । ग्रामजनाः न विश्वासं कुर्युः इति मत्वा अहं ततः पलायनं कृत्वा चन्द्रपुरं प्राप्तवान् । चन्द्रपुरे एकवर्षं यावत् स्थित्वा अहं षट्सहस्रं रूप्यकाणि सङ्गृहीतवान् । रङ्गपुरीयाः अपि ग्रामत्यागाय अवसरं न दत्तवन्तः । अतः अन्ये यथा न जानीयुः तथा रङ्गपुरं गत्वा अहम् ऋणं, ऋणात् अपि अधिकां वृद्धिं च प्रत्यर्पितवान् । ततः अत्र आगतवान् । अत्र द्वादशसहस्रं रूप्यकाणि सङ्गृहीतवान् अस्मि । एतत् धनं स्वीकृत्य चन्द्रपुरीयाणाम् ऋणं प्रत्यर्प्य ग्रामं गत्वा ललिताम्बा प्रार्थनीया इति चिन्तयन् आसम् । तावति काले नीलः अत्र उपस्थितः । एषा मम कथा'' इति ।

तदा नीलः विकटाट्टहासपूर्वकम् - ''अहो चोरस्य चातुर्यम् ! भवान् द्वादशसहस्रं रूप्यकाणि स्वीकृत्य इतः पलायितुम् उद्युक्तः आसीत् इति भाति । मम आगमनेन भवतः रहस्योद्घाटनम् अभवत्'' इति उक्तवान् ।

''नील, भवतः वचनम् उचितं न । सत्यासत्ययोः निर्णायकः भवान् न, अपि तु अत्रत्याः प्रमुखाः । भवद्ग्रामीणेभ्यः



दातव्यम् इति उद्देशेन सङ्गृहीतं धनं स्वयम् आगत्य अहं प्रत्यर्पयिष्यामि । सर्वेभ्यः मूलऋणस्य द्विगुणितं धनं दास्यामि । भवतु वा ?'' इति उक्तवान् कनकराजः ।

तदा नीलः - ''तर्हि पुनः अन्यं ग्रामं गत्वा चतुर्विंशतिसहस्रं रूप्यकाणि सङ्गृह्य एतद्ग्रामीणेभ्यः दास्यति खलु भवान् ? एवं कति दिनानि यावत् कर्तुम् अर्हति भवान् ? भवन्तं कारागृहं प्रापय्य एव मनश्शान्तिम् अनुभवामि अहम् '' इति कोपेन उक्तवान् ।

तदा ग्रामाधिकारी मध्ये प्रविश्य - ''अस्माकं क्षेत्राणि फलभरितानि सन्ति । वयं प्रामाणिकतायां विश्वसिमः । कनकराजस्य प्रामाणिकताविषये अपि अस्माकं विश्वासः अस्ति । एतस्मै दत्तस्य

ऋणस्य विषये अस्माकं चिन्ता एव नास्ति । ऋणप्रत्यर्पणस्य विषये कनकराजस्य उत्कण्ठा एव अधिका अस्ति । एषः चिन्तयति यत् 'अहं कमलापुरीयाणाम् ऋणी अस्मि' इति । वयं तु तथा न भावयामः । भवद्ग्रामीणानाम् ऋण-प्रत्यर्पणानन्तरम् एतं त्यजतु । तथा कृतं चेत् एव एषः अस्माकं ग्रामीणानाम् उपकारं कर्तुं शक्नोति'' इति उक्तवान् ।

तदा नीलः अनङ्गीकारपूर्वकं शिरः चालयन् - ''एतम् एवम् एव परित्यजामः चेत् एषः अन्यग्रामीणान् अपि पीडयेत् । ललिताम्बां सम्प्रार्थ्य इतरान् उपकर्तुं यदि एषः शक्नोति तर्हि एतेन स्वयं जनानां धनं किमर्थम् अपहर्तव्यम् ?'' इति पृष्टवान् ।

तदा ग्रामाधिकारी हसन् - ''रङ्गपुरस्य त्यागसमये तद्ग्रामीणैः अनुरोधः कृतः इत्यतः चन्द्रपुरं गन्तव्यम् अभवत् कनकराजेन । तत्रापि भवद्भिः अनुरोधः कृतः इत्यतः एषः अत्र आगतवान् । इदानीं वयम् 'ऋणम् एव नास्ति' इति वदन्तः स्मः । अतः एषः निश्चयेन ललिताम्बा-समीपं गमिष्यति । स्वस्य ऋणस्य प्रत्यर्पणार्थं स्वयं परिश्रमपूर्वकं धनं सम्पादनीयम् इत्येषः एतस्य विचारः मह्यम् अरोचत । यत् स्वयं कर्तुं न शक्नोति तस्य प्राप्त्यर्थं केवलं ललिताम्बायाः समीपं गच्छति सः । मम चिन्तनम् अयुक्तं चेत् अपि मम चिन्ता नास्ति'' इति उक्तवान् ।

तदा कनकराजः ग्रामाधिकारिणे कृतज्ञतां समर्प्य नीलेन सह गत्वा सर्वेषां चन्द्रपुरीयाणाम् ऋणं प्रत्यर्पितवान् ।

केषाञ्चित् दिनानाम् अनन्तरं ग्राम-प्रमुखस्य सुन्दरः पुत्रः जातः । सर्वैः कृताः अपेक्षाः पूर्णाः अभवन् । ग्रामस्य कूपाः मधुरजलैः पूर्णाः अभवन् । तदा सर्वे अपि सर्वत्र अपि कनकराजस्य विषये प्रचारं कृतवन्तः । बहवः कनकराजस्य सम्माननं कर्तुम् इष्टवन्तः । किन्तु सः केनापि कुत्रापि न दृष्टः एव । स्वहितसाधनार्थं स्थितात् अवकाशात् वयं वञ्चिताः इति केचन इदानीमपि दुःखम् अनुभवन्तः सन्ति ।






# १

(सूर्यभगवतः धेनूः मारयित्वा खादितवन्तः इति कारणतः रूपधरस्य सर्वे अपि अनुचराः समुद्रे निमज्जिताः अभवन् । रूपधरः एकाकितया किञ्चन समुद्रतीरं प्राप्तवान् । तस्य देशस्य राज्ञः महामेधसः पुत्र्याः वारुण्याः साहाय्येन सः राजभवनं प्राप्य आश्रयं सम्पादितवान् । महामेधाः 'सर्वविधसाहाय्यं करोमि' इति आश्वासनं दत्तवान् । तद्दिने रात्रौ रूपधरः सुखेन निद्रितवान् । तदनन्तरम् ....)

अनन्तरदिने सूर्योदयः अभवत् । यदा महामेधाः उत्थितवान् तदा एव रूपधरः अपि जागरितः अभवत् । उभौ अपि सभाभवनं प्रति प्रस्थितौ । सभाभवनं नौकास्थानस्य समीपे एव आसीत् । तत्र सुन्दरीभिः शिलाभिः निर्मितानि आसनानि आसन् । महामेधाः स्वकीये आसन्दे उपविश्य रूपधरम् अपि स्वस्य पार्श्वे एव उपवेशितवान् ।

तावति काले राज्ञः कश्चित् भटः रूपधरस्य प्रयाणस्य व्यवस्थां कल्पयितुं नगरं गतवान् । तत्र सः नामकथनपूर्वकं सर्वान् आहूय 'कश्चित् महापुरुषः अतिथिरूपेण राज्ञः गृहम् आगतवान् अस्ति । सर्वे सभाभवनम् आगच्छन्तु' इति सूचितवान् ।

एतं नूतनम् अतिथिं द्रष्टुं सर्वे अपि ज्येष्ठाः अनुक्षणं प्रस्थाय सभाभवनम्



आगतवन्तः । सर्वाणि अपि आसनानि शीघ्रं पूरितानि अभवन् ।

आगतवतः सर्वान् उद्दिश्य महामेधाः - ''सभ्याः, मम पार्श्वे उपविष्टः एषः महाशयः मम अतिथिः अस्ति । एषः कः इति अहं न जानामि । समुद्रे प्रयाणं कृत्वा एषः अत्र प्राप्तवान् अस्ति । एषः पश्चिमदिक्तः आगतवान्, उत पूर्वदिक्तः इत्यपि न जानामि । किन्तु एतावत् तु जानामि यत् एषः अस्माकं साहाय्यं प्रार्थयन् अस्ति इति । साहाय्यं निराकर्तुं सर्वथा न शक्नोमि । यतः मम गृहम् आगतः यः कोऽपि निराशः सन् न गच्छेत् । अतः अस्माभिः कुलधर्मानुसारं साहाय्यं करणीयम् एव । वयम् एतस्मै नूतनां नौकां निर्माय चालनार्थं द्विपञ्चाशत् नाविकान् प्रेषयिष्यामः । नौदण्डचालने समर्थाः इदानीमेव नौण्डान् सज्जीकृत्य भोजनार्थं मम गृहम् आगच्छन्तु । ज्येष्ठाः सर्वे अपि भोजनार्थं मम गृहम् आगच्छेयुः । भोजनार्थं सर्वविधसज्जताः अपि करिष्यामि । तथैव मध्ये मनोरञ्जनार्थम् कश्चित् उत्तमं गायकम् अपि आह्वयन्तु भवन्तः'' इति वदन् रूपधरेण सह स्वगृहं प्रति प्रस्थितवान् ।

तत्क्षणे एव गायकाः एतां वार्तां ज्ञातवन्तः । भोजनस्थानं प्राप्तवन्तः च । द्विपञ्चाशत् जनाः नाविकाः नौकां जले अवतार्य नौदण्डान् योजितवन्तः । तस्यां नौकायां वस्त्रपटयुक्तस्तम्भं बद्ध्वा नौकां गभीरे जले अवतार्य राजभवनं प्रति प्रस्थितवन्तः ।

राजभवनस्थानि प्राङ्गणानि, प्रकोष्ठाः, सभास्थानानि च अतिथिभिः पूर्णानि । भोजनार्थम् अजान्, वराहान्, वृषभान् च कर्तितवन्तः । भोजनसमये कश्चित् अन्धगायकः सम्यक् गानं कृतवान् । तत् गानं श्रृण्वन्तः सर्वे अपि महता आनन्देन भोजनं कृतवन्तः । अन्धगायकेन गीयमानं गीतं रूपधरस्य जीवनघटनया सम्बद्धम् एव आसीत् । सा च घटना एवम् आसीत् ।.....

ट्रोय्युद्धं न प्रारब्धम् आसीत् । राराजः भविष्यं ज्ञातुं 'मौधो'समीपस्थं सूर्यस्थलम् आगतवान् आसीत् । 'ट्रोयपतनात् पूर्वं भवतः योधाः परस्परं कलहं कुर्वन्ति' इति

सूर्यभगवान् रराजम् उक्तवान् । अग्रे तथैव प्रवृत्तम् । कदाचित् भोजनसन्दर्भे रूपधरः वज्रकायः च परस्परं निन्दनम् आरब्धवन्तौ । रराजेन कलहं दृष्ट्वा खेदः अनुभोक्तव्यः आसीत् । किन्तु सः सन्तुष्टः । यतः तयोः कलहः शुभसूचकः इति सूर्यभगवता पूर्वम् एव रराजं प्रति उक्तम् आसीत् ।

एताम् एव घटनाम् अधिकृत्य अन्धगायकः गायन् आसीत् । एतत् गीतं श्रुत्वा रूपधरः भावाविष्टः अभवत् । तस्य नेत्राभ्याम् अश्रूणि आगतानि । अश्रूणि अन्ये न पश्येयुः इति उद्देशेन सः वस्त्रेण स्वमुखम् आच्छादितवान् ।

मध्ये मध्ये यदा गायकः गीतं स्थगयति स्म तदा रूपधरः नेत्रे मार्जयित्वा वस्त्रम् अपसारयति स्म । यदा गायकः गीतम् आरभते तदा पुनश्च तस्य नेत्राभ्याम् अश्रूणि प्रवहन्ति स्म । पुनश्च सः मुखम् आच्छादयति स्म ।

रूपधरस्य चर्याम् अन्ये केऽपि न अवलोकितवन्तः । किन्तु पार्श्वे उपविष्टः राजा महामेधाः तु सुसूक्ष्मं सर्वं परिशीलयन् आसीत् ।

रूपधरेण क्षीणध्वनिना क्रियमाणं क्रन्दनम् अपि श्रुतवान् सः । अन्ते सः अतिथीन् उद्दिश्य - "मित्राणि, सर्वेषां भोजनं तु समाप्तम् अस्ति । अतः इदानीं गीतं स्थगयाम । क्रीडादीनाम् अवलोकनं करवाम । अस्माकम् अतिथेः निमित्तम् एव



एताः क्रीडाः व्यवस्थापिताः सन्ति । मल्लयुद्धे, नोदनक्रीडायां च अस्माकं वैशिष्ट्यं दृष्ट्वा अतिथिः चकितः सन् स्वदेशवासिनां पुरतः श्लाघमानः भवेत्" इति उक्तवान् ।

उत्थितं राजानं दृष्ट्वा सर्वे अपि उत्थाय आनन्देन जल्पन्तः क्रीडाङ्गणं प्रति प्रस्थितवन्तः ।

तत्र सहस्राधिकाः जनाः सम्मिलिताः आसन् । व्यायामादिक्रीडासु निष्णाताः युवकाः स्पर्धायां भागं वोढुं सज्जाः आसन् ।

प्रथमं धावनस्पर्धा आसीत् । अनन्तरं मल्लयुद्धं, भारवतः वस्तुनः उन्नयनं, क्षेपणं च आसीत् । स्पर्धायाम् अन्ते कश्चित्



विजेता इति घोषितः भवति स्म । मल्लयुद्धे राजकुमारः एव जयं प्राप्तवान् । स्वानुचरान् उद्दिश्य सः राजकुमारः - "मित्राणि, अस्माकम् अतिथिः काः काः व्यायामक्रीडाः जानाति इति पृच्छाम । दर्शनेन एव ज्ञायते यत् एषः दृढकायः इति । ऊरू, जङ्घा, कण्ठादयः च एतस्य शक्तियुताः दृश्यन्ते । एतस्य हस्तयोः आकारः अपि शक्तियुक्तत्वं द्योतयति" इति उत्साहेन उक्तवान् ।

तदा अनुचराः एतं प्रस्तावम् अङ्गीकुर्वन्तः राजकुमारम् उद्दिश्य - "साधु, भवान् एव गत्वा तं स्पर्धार्थम् आह्वयतु" इति उक्तवन्तः ।

तदा राजकुमारः रूपधरम् उद्दिश्य - "स्वामिन्, व्यायामक्रीडादिषु भवान् आसक्तः चेत् स्पर्धायां भागं वोढुम् अर्हति । क्रीडाः तु सर्वे अपि इच्छन्ति एव । भवता निरुत्साहेन निराशेन वा भवितव्यं नास्ति । भवन्तं स्वदेशं प्रापयितुम् नौका नाविकाः च सज्जाः एव सन्ति" इति उक्तवान् ।

"किमर्थं तथा वदति मित्र ? भवान् मम विषये अन्यथा चिन्तितवान् । एषः मम कष्टकालः । मम दृष्ट्या क्रीडानिमित्तम् एषः कालः उचितः न । भवताम् अतिथिः सन् अहं शिष्टाचारं पालयन् स्पर्धाः पश्यन् अस्मि, न तु मनोरञ्जनार्थम् । प्रकृतं तु अहम् गृहं गन्तुम् इच्छामि" इति उक्तवान् रूपधरः ।

तदा रूपधरस्य उपहासं कुर्वन् कश्चित् युवकः तम् उद्दिश्य - "भवतः वेषभूषणेन एव ज्ञायते यत् भवान् क्रीडादिविषये प्राथमिकज्ञानम् एव न प्राप्तवान् इति । वाणिज्यार्थम् उपयुज्यमानां नौकां चालयितुम्, अङ्गुल्या गणनादिकं कर्तुं च समर्थः इव भाति भवान्, तावदेव" इति उक्तवान् ।

तदा अपरः युवकः उक्तवान् - "व्यायामः शारीरकं मानसिकं च स्वास्थ्यं वर्धयति । अतः वाणिज्यादिकार्यरतैः अपि व्यायामे आसक्तिः प्रदर्शनीया एव । अतः एव वयं सर्वे व्यायामादिषु क्रीडादिषु च आसक्तिं प्रदर्शयन्तः स्मः । भवतः देशे किम् एतादृशी प्रवृत्तिः न दृश्यते ? किमर्थं भवान् क्रीडादिकं दृष्ट्वा अपि निरुत्साही इव



निराशः इव च उपविष्टः अस्ति ? क्रीडादयः किमर्थं भवतः उत्साहं न वर्धयन्ति ? किमर्थं ताः भवतः मुखस्य म्लानतां न अपनयन्ति ? वयं चिन्तयाम – क्रीडादिषु अनासक्तिः एव अत्र कारणम् इति । यदि तदेव कारणं स्यात् तर्हि नितरां लज्जास्पदविषयः एषः'' इति ।

एतेन रूपधरः कुपितः अभवत् । भ्रूचालनपूर्वकं कोपं प्रदर्शयन् सः – ''बाल, भगवान् कांश्चन कुरूपिणः करोति । किन्तु तेषां मुखतः मधुरवचनानि एव निस्सरन्ति । तादृशवचनं श्रोतुं प्रजाः अहमहमिकया आगच्छन्ति । अन्ये केचन सुरूपिणः भवन्ति । किन्तु ते मुखम् उद्घाटयन्ति चेत् इतरैः कर्णौ पिधाय स्थातव्यम् । भगवान् भवन्तं सुन्दरतया सृष्टवान् अस्ति । किन्तु भवते बुद्धिशक्तिं तु न दत्तवान् । अहं कष्टादिकम् अनुभूय बलहीनः जातः स्याम् । तथापि मम शक्तिसामर्थ्ययोः तु न कापि क्षतिः । पश्यतु मम सामर्थ्यम्'' इति वदन् आसनात् उत्थाय कञ्चित् महान्तं शिलागोलकम् उन्नीय स्वस्य शिरः परितः भ्रामयन् सुदूरे क्षिप्तवान् ।

मापनं कुर्वाणः कश्चित् बालः तत्र गत्वा दैर्घ्यं दृष्ट्वा – ''स्वामिन्, भवता क्षिप्तः गोलकः सुदूरे पतितः अस्ति । एतावद्दूरं क्षेप्तुं समर्थः अन्यः कोऽपि अत्र नास्ति एव । भवान् निश्चिन्तः भवतु'' इति हसन् उक्तवान् ।

एतानि वाक्यानि श्रुत्वा रूपधरः सन्तुष्टः । उत्साहं प्राप्य सः – ''भो भोः युवकाः, यदि सामर्थ्यम् अस्ति तर्हि मया सह स्पर्धन्ताम् । कथञ्चित् मया स्पर्धाङ्गणम् आगतम् अस्ति । अग्रे स्थापितं पदं पृष्ठतः नेतुं न इच्छामि । मल्लयुद्धं वा भवतु, धावनस्पर्धा वा भवतु, अहं सज्जः अस्मि । धनुर्विद्यामपि अहं जानामि एव । धनुर्विद्यायां मत्तः श्रेष्ठः धनदः एकः एव आसीत् । सः तु इदानीं नास्ति । अतः भवत्सु यः कोऽपि मया सह स्पर्धितुम् अर्हति'' इति वीरावेशपूर्वकम् उक्तवान् । एतत् श्रुत्वा सर्वे मौनम् आश्रितवन्तः ।

तदा महामेधाः रूपधरम् उद्दिश्य – ''स्वामिन्, अन्ये अस्माकम् अवमाननं कुर्वन्ति चेत् स्वसामर्थ्यविषये कथनं न

दोषाय । भवतः यादृशं सामर्थ्यं तादृशं सामर्थ्यम् अत्रत्यानां नास्ति एव । वयम् एतावदेव इच्छामः यत् भवान् अत्र आनन्देन तिष्ठेत् इति । कासुचित् विद्यासु वयम् असमर्थाः एव । मल्लयुद्धादिषु अत्रत्यानां विशेषश्रद्धा नास्ति एव । केवलं नौकानिर्माणं नौकाचालनं च वयं जानीमः । अस्मदीयानां सङ्गीतनृत्यादिकं भवता अवलोकनीयम् इति अस्माकम् अपेक्षा । यदा भवान् गृहं प्राप्स्यति तदा पत्नीपुत्रादिभिः सह वार्तालापसन्दर्भे अत्रत्यान् विशिष्टानुभवान् स्मरेत् इत्येव अस्माकम् अभिलाषः'' इति उक्तवान् ।

अनन्तरं नृत्यम् आरब्धम् । तैः कृतं समूहनृत्यं दृष्ट्वा रूपधरः आश्चर्यचकितः अभवत् । सः महामेधसम् उद्दिश्य - ''महाराज, एतादृशम् अपूर्वं रमणीयं नृत्यम् अहं कदापि अन्यत्र न दृष्टवान् आसम्'' इति उक्तवान् । अतिथेः रूपधरस्य वचनं श्रुत्वा आनन्दतुन्दिलः राजा द्वादश राजकुमारान् आहूय तेषां द्वारा रूपधराय नूतनवस्त्रं सुवर्णं च उपायनरूपेण दापितवान् । रूपधरं उपहसितवान् युवकः अपि रजतमय-त्सरुयुक्तं गजदन्तेन निर्मितं खड्गकोषम् उपायनीकृतवान् ।

तद्दिने रात्रौ भोजनसन्दर्भे अन्धगायकः काष्ठाश्वस्य घटनाविषये गाथां गीतवान् । ग्रीक्‌जनाः स्वशिबिराणि दग्ध्वा नौकया यत् प्रतिगच्छन्ति ततः कथायाः आरम्भः अभवत् । अनन्तरं ट्रोजन्‌जनैः काष्ठमयम् अश्वं स्वीकृत्य नगरे यत् अटितं तत् श्रुत्वा चिन्ताक्रान्तः रूपधरः रोदनम् आरब्धवान् ।

एतत् दृष्ट्वा महामेधाः 'गीतगानं स्थगयन्तु' इति सूचितवान् । ततः रूपधरम् उद्दिश्य - ''स्वामिन्, सत्यं मा गोपयतु । कः भवान् ? भवतः नाम किम् ? भवतः प्रदेशः कः ? भवान् कस्य देशस्य प्रजाः ? कुतः आगमनं भवतः ? ट्रोय्‌युद्धस्य घटनया किमर्थं भवान् दुःखितः अभवत् ? तस्मिन् युद्धे भवतः आत्मीयः कोऽपि दिवङ्गतः वा ?'' इत्येवं बहून् प्रश्नान् पृष्टवान् ।

- (अनुवर्तते)



# दण्डनम्

उदयपुरराज्ये राजधानीतः बहिः कारागारम् आसीत् । कारागारस्थानाम् अपराधिनां विरामसमयस्य सदुपयोगार्थं राजा कारागारे एव एकं ग्रन्थालयं व्यवस्थापितवान् आसीत् । अपराधिनः विरामसमये ग्रन्थान् पठन्तः विनोदं तृप्तिं वा प्राप्नुवन्ति स्म । केचन तु ततः मनसः परिष्कारम् अपि प्राप्नुवन्ति स्म ।

उदयपुरे वासुदेवः नाम कश्चन धनिकः आसीत् । कदाचित् तस्य मनसि विचारः आगतः यत् मया काव्यानि लेखनीयानि, महाकवित्वं च प्राप्तव्यम् इति । अनन्तरदिने एव सः स्वनाम 'वासुदेवकविः' इति परिवर्त्य काव्यलेखनम् आरब्धवान् । तेन लिखितानि काव्यानि जनादरणीयानि न जातानि, प्रत्युत शिरोवेदनाजनकानि जातानि । अतः जनाः भावयन्ति स्म यत् वासुदेवकवेः काव्यस्य पठनं नाम शिरोवेदनायाः आह्वानम् इति । अतः वासुदेवकविना लिखिताः सर्वे ग्रन्थाः तस्य गृहे एव स्थिताः अभवन् ।

'एतेषां ग्रन्थानां विनियोगः कथम् ?' इति बहुधा विचिन्त्य एकम् उपायम् अन्विष्टवान् वासुदेवकविः । सः सर्वान् ग्रन्थान् गोण्यां पूरयित्वा सेवकद्वारा कारागारं नीतवान् । 'एते ग्रन्थाः कारागारस्थे ग्रन्थालये स्थापनीयाः' इति कारागाराधिपतिं निवेदितवान् च ।

वासुदेवकविः कीदृशः इति कारागाराधिपतिः जानाति स्म । अतः सः विनयेन वासुदेवकविम् उक्तवान् - "कविवर्य ! क्षन्तव्यः अयं जनः । राज्ञः अनुमतिं विना अपराधिनां दण्डनस्य वर्धने मम अधिकारः नास्ति । अतः भवतः ग्रन्थान् कारागारस्थे ग्रन्थालये स्थापयितुम् अहं न अर्हामि" इति ।

एतत् श्रुत्वा वासुदेवकविः ज्ञातवान् यत् स्वकाव्यस्य कियत् मूल्यम् इति । लज्जितः सः गृहं गत्वा तान् ग्रन्थान् दग्धवान् । कवित्वेन आत्मनः परिचयकथनं सर्वथा परित्यक्तवान् च ।






# विजयस्य साहसम्

दृढचित्तः त्रिविक्रमः पुनः अपि वृक्षस्य समीपम् आगतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोपितवान् । ततः अधः आगत्य पूर्ववत् मौनेन श्मशानं प्रति प्रस्थितवान् च । तदा शवे विद्यमानः वेतालः अवदत् - "अये राजन्, अस्यां घोररात्रौ, अस्मिन् भयङ्करे श्मशाने, भवतः कष्टसाध्यस्य श्रमस्य दर्शनेन ज्ञायते यत् भवान् विधिवञ्चितः इति । भवादृशाः पुरुषाः साहसवन्तः स्युः चेत् अपि भवतां प्रयत्नस्य परिणामः शून्यः एव भवति । यतः भवन्तः फलप्राप्तिसमये योग्यं निर्णयं न स्वीकुर्वन्ति । तस्य परिणामतः श्रमस्य साहसस्य च योग्यः फलितांशः न प्राप्यते । उदाहरणार्थं अपूर्वात् सौभाग्यात् वञ्चितस्य विजयस्य कथां श्रावयामि, येन भवतः मार्गायासः परिहृतः भवेत् । श्रद्धया शृणोतु



तावत्'' इति ।

ततः वेतालेन कथा आरब्धा -

पूर्वं धीरसेनः नाम कश्चित् महाराजः चन्द्रपुरं पालयति स्म । तस्य पुत्री कमलमुखी रूपवती आसीत् । यः तां परिणयति सः एव अग्रे तस्य राज्यस्य राजा भवितुम् अर्हति स्म । अतः तां परिणेतुं बहवः राजकुमाराः विशेषतः प्रयतमानाः आसन् ।

राजकुमारी कमलमुखी स्वभावतः धीरा आसीत् । तस्याः एका इच्छा आसीत् यत् धीरः एव मां परिणयेत् इति । अतः सा पितरम् उक्तवती - ''स्पर्धायां जितवन्तम् एव अहं परिणेष्यामि'' इति । ततः स्वस्य मनसि स्थितायाः स्पर्धायाः स्वरूपं विवृतवती च । पुत्र्या सूचितं स्पर्धायाः स्वरूपं श्रुतवतः धीरसेनस्य आघातः अभवत् ।

अतः सः पुत्रीम् उक्तवान् - ''वत्से, एषा स्पर्धा सामान्या न । एतस्यां स्पर्धायां कोऽपि भागं वोढुं न अर्हति । अतः अन्यां काञ्चित् स्पर्धां सूचयतु भवती'' इति अवदत् ।

''तात ! अलं चिन्तया । यः मयि विशेषानुरागवान् भवति सः स्वप्राणान् तृणाय मन्यते एव । तादृशः कश्चित् मया सूच्यमानायां स्पर्धायां भागं गृह्णीयात् एव'' इति मन्दहासपूर्वकम् उक्तवती कमलमुखी ।

पुत्र्याः अचलम् अभिमतं ज्ञात्वा निरुत्तरः धीरसेनः - ''तथैव भवतु'' इति अवदत् ।

'यदि स्पर्धायाः नियमः पूर्वम् एव ज्ञायेत तर्हि कोऽपि स्पर्धायां भागं न गृह्णीयात् । अतः दिननिश्चयमात्रम् उद्घोषयामि' इति चिन्तितवान् धीरसेनः । तदनुगुणम् 'आगामिपूर्णिमायां स्पर्धा भविष्यति । स्पर्धायां यः जयं प्राप्स्यति तं राजकुमारी परिणेष्यति' इति समग्रे देशे सडिण्डिमघोषं वार्तां प्रसारितवान् सः ।

चन्द्रपुरस्य पार्श्वे एव श्रीरङ्गपुरं नाम कश्चन ग्रामः आसीत् । तस्मिन् ग्रामे विजयः नाम कश्चित् विकलाङ्गयुवकः आसीत् । तस्य द्वौ अपि हस्तौ न आस्ताम् । बाल्ये एव तदीया माता दिवङ्गता आसीत् । तस्य पिता अन्यां काञ्चित् परिणीतवान् आसीत् ।

विमाता विजयं सर्वदा पीडयति स्म । 'किमपि कार्यं कर्तुम् असमर्थः भवान् निष्प्रयोजकः, भूमेः भारभूतः च । भवादृशानां जीवनं मरणं चापि समानम् एव । धिक् भवतः जीवनम्' इत्यादिभिः कटुवचनैः सर्वदा विजयं निन्दति स्म सा । पुत्रस्य एतादृशीं स्थितिं दृष्टवतः पितुः महान् खेदः भवति स्म । किन्तु पत्न्याः धार्ष्ट्यस्वभावं स्मरन् सः पत्नीं किमपि न वदति स्म ।

अस्मिन् समये विजयः कमलमुख्याः स्वयंवरवार्तां श्रुतवान् । स्वयंवरं द्रष्टुं विजयस्य इच्छा अभवत् । साहसस्पर्धाम् अपि द्रष्टुम् इष्टवान् सः । अतः सः पूर्णिमायाः प्रभाते एव गृहतः प्रस्थाय चन्द्रपुरं प्राप्तवान् ।

स्पर्धायाः दिने विविधदेशेभ्यः समागताः राजकुमाराः, साहसिनः युवकाः च चन्द्रपुरस्य आस्थाने उपस्थिताः आसन् । स्वयंवरस्य वेदिकायां महाराजः धीरसेनः, राजकुमारी कमलमुखी, महामन्त्री मल्लिकवर्मा च उपविष्टाः आसन् ।

स्वयंवरस्य समयः यदा सन्निहितः तदा महामन्त्री आसनात् उत्थाय सभासदः उद्दिश्य – ''राजकुमार्याः स्वयंवरस्य अङ्गतया स्पर्धा अस्ति इत्येतावन्मात्रं जानन्ति भवन्तः । किन्तु स्पर्धायाः नियमं न जानन्ति । तं नियमम् अहम् इदानीं वदामि । स्पर्धायां यः भागं वोढुम् इच्छति तेन दुर्गस्य उपरि गन्तव्यम् । दक्षिणदिशि विद्यमानं



गोपुरम् आरुह्य ततः अधः लङ्घनं करणीयम् । अधः त्रयाणां खड्गयुक्त-वलयानां मध्ये विद्यमाने स्थले सः पतेत् । खड्गानां मध्ये विद्यमानस्य स्थलस्य वैशाल्यं पादचतुष्टयपरिमितमात्रम् अस्ति । अतः दुर्गशिखरात् कूर्दनस्य प्रयत्नः प्राणापायाय अपि भवेत् इति मया पुनः कथनीयं नास्ति । राजकुमार्याः परिणयं यः इच्छति तेन एतावत् वा साहसं करणीयम् एव । अतः यः कमलमुख्यां विशेषानुरागवान् अस्ति सः अग्रे आगत्य स्पर्धायां भागं वहतु नाम'' इति उद्घोषितवान् ।

स्पर्धायाः नियमश्रवणेन तत्र सम्मिलिताः सर्वे स्तम्भीभूताः अभवन् । किञ्चित्कालं सभायां मौनं प्रसृतम् आसीत् । क्रमशः



सभायां परस्परं सम्भाषणम् आरब्धम् ।

"एषा कीदृशी स्पर्धा ? दुर्गस्य उपरिष्टात् खड्गवलयानां मध्ये लङ्घनं मरणाय भवति । खड्गयुद्धं मल्लयुद्धं च वीराणां साहसिनां च निकषस्थानम् अस्ति । एषः महाराजः राजकुमारान् मारयितुम् इच्छति इति भाति । अतः एव एतादृशीं प्राणहारिणीं स्पर्धाम् आयोजितवान् अस्ति राजा । एतस्यां स्पर्धायां प्रविश्य मरण-प्राप्तिः तु सर्वथा मूर्खतायै" इति परस्परम् सम्भाषणम् आरब्धवन्तः राजकुमाराः ।

परन्तु कुतूहलेन स्पर्धां द्रष्टुम् आगतस्य विजयस्य चिन्तनं तु स्पर्धानियमश्रवणात् परिवृत्तम् । सः आसनतः उत्थाय महाराजस्य पुरतः आगतवान् । उक्तवान् च - "महाराज, अहं स्पर्धायां भागं वोढुं सिद्धः अस्मि" इति ।

महाराजः धीरसेनः हस्तद्वयविहीनं विजयम् आपादमस्तकं दृष्टवान् । 'यदि एषः स्पर्धायां जयं प्राप्स्यति तर्हि मम पुत्र्याः स्थितिः शोचनीया भविष्यति' इति चिन्तयन् सः खेदम् अनुभूतवान् । तथापि अनन्य-गतिकतया क्षणकालस्य मौनस्य अनन्तरं सः उक्तवान् - "तथैव भवतु" इति ।

अनेकेषु राजकुमारेषु सत्सु अग्रे आगतवन्तं विजयं दृष्टवती राजकुमारी महान्तं खेदम् अनुभूतवती । 'स्पर्धायाः नियमस्य अनुसारं विजयी एव मया परिणेतव्यः । अतः यदि एषः विकलाङ्गः विजयः जयं प्राप्नुयात् तर्हि एषः एव मया परिणेतव्यः भवेत्' इति चिन्तयन्ती सा भीता । किन्तु 'विकलाङ्गः कदापि एतस्यां स्पर्धायां विजयं प्राप्तुं न अर्हति' इत्येतत् चिन्तनं तस्याः आतङ्कं न्यवारयत् ।

सामान्यः कश्चित् स्पर्धायां भागं वहति इति ज्ञातवन्तः सर्वे राजकुमाराः अवमानिताः अभवन् । तेषु कश्चित् विजयम् उद्दिश्य उच्चस्वरेण उक्तवान् - "भोः, भवान् कः ? भवतः मातापितरौ कौ ? दुर्गस्य उपरिष्टात् अधः पतनेन मरणं निश्चितम् एव। एतत् दुःसाहसं भवतः मातापितृभ्यां किम् अनुमन्येत ? किमर्थं भवान् मृत्युमुखं स्वयं प्रविशति ? पूर्वापरम् अनालोच्य एतादृशे असाध्ये कार्ये प्रवेशः किं विवेकितां द्योतयति ? विकलाङ्गः

भवान् क्रीडास्पर्धादिषु भागं वोढुम् अपि असमर्थः । एवं स्थिते दुस्साध्ये एतस्मिन् कार्ये भवतः प्रवर्तनं कथं वा लाभाय भवेत् ? एतद्द्वारा आत्महत्या करणीया इति भवतः इच्छा वा ? कार्ये प्रवर्तनात् पूर्वं कृत्याकृत्यं लाभालाभं च परिशीलनीयम् एव । अतः अग्रे गमनात् पूर्वं सर्वं चिन्तयतु कृपया'' इति ।

विजयः एतत् वचनं श्रुतवान् । तथापि सः ततः पलायनं कर्तुं सिद्धः न आसीत् । सः दुर्गं प्रति गतवान् । दुर्गस्य उपरि गन्तुं तत्र एका निःश्रेणी आसीत् । 'एतस्याः आरोहणं कथम् ?' इति चिन्तयन् विजयः तत्रैव मौनं स्थितवान् ।

तदा महामन्त्री भटौ आदिष्टवान् - 'एतस्य साहाय्यं कुरुताम्' इति । भटौ जागरूकतया विजयम् उन्नीय दुर्गस्य उपरि नीतवन्तौ ।

विजयः उपरिष्टात् यदा अधः दृष्टवान् तदा तस्य पादौ कम्पितौ जातौ । भयेन तस्य शरीरे स्वेदः उत्पन्नः । रक्तगतेः वेगः अधिकः अभवत् । अधः स्थिताः खड्गवलयाः यमपाशाः इव अभासन्त । 'एतत् स्पर्धास्थानम् उत वधस्थानम् ?' इति सन्देहः अपि तस्य मनसि उत्पन्नः । 'स्पर्धायां भागग्रहणं परित्यज्य गच्छामि चेत् कथम्' इत्यपि विचारः तस्य मनसि क्षणकालम् आगतः । परन्तु विजयः सङ्कल्पं स्मरन् आत्मानं निगृहीतवान् । सकृत् शिरश्चालनेन मनसः दौर्बल्यं निवारितवान् सः । सर्वेषां दृष्टिः विजयस्य उपरि एव आसीत् ।





विजयः इष्टदेवं स्मरन् दुर्गतः खड्गवलयानां मध्ये लङ्घनं कृतवान् । एतत् अदृष्टपूर्वं साहसं दृष्ट्वा सर्वे राजकुमाराः, स्वयंवरं द्रष्टुम् आगताः सामान्याः जनाश्चापि रोमाञ्चिताः अभवन् ।

परन्तु अपरक्षणे एव सर्वे आनन्देन करताडनं कृतवन्तः । यतः अदृष्टवशात् विजयः अपायात् रक्षितः आसीत् । सः खड्गवलयानां मध्ये विद्यमाने रिक्ते स्थले पतितवान् आसीत् । अतः सः विशेषतः व्रणितः जातः न आसीत् ।

एतेन राजकुमारी स्तम्भीभूता अभवत् । 'एतादृशः विकलाङ्गः कश्चित् स्पर्धायां जयं प्राप्नुयात्, सः मया परिणेतव्यः भवेत्' इति सा कदापि न चिन्तितवती आसीत् । सा पूर्वं चिन्तितवती आसीत् - 'कश्चित् साहसी राजकुमारः स्पर्धायां जयं प्राप्स्यति, मम पतिः भविष्यति च' इति ।

क्षत्रियाणां नियमानुसारं राजकुमार्या विजयः एव परिणेतव्यः आसीत् । धीरसेनः पुत्र्याः स्थितिं दृष्ट्वा दुःखितः अभवत् । राजकुमारी कमलमुखी अपि विषण्णवदना अभवत् ।

एतयोः स्थितिं ज्ञात्वा विजयः वेदिकायां स्थितस्य महाराजस्य पुरतः आगतवान् । महाराजं नमस्कृत्य - ''महाराज, अहं राजकुमारीं परिणेतुं सिद्धः न अस्मि । अतः अहं क्षन्तव्यः । स्पर्धायां भागग्रहणे राजकुमार्याः परिणयः कारणं न । स्पर्धायां जयस्य प्राप्तिः एव कश्चन विशेष-पुरस्कारः । स च पुरस्कारः अद्य मया प्राप्तः अस्ति'' इति उक्त्वा ततः निर्गतवान् ।

वेतालः एवं कथां समाप्य - ''महाराज, विजयस्य व्यवहारः कस्यचित् उन्मत्तस्य इव अस्ति किल ? राजकुमार्याः विवाहः यदि तस्य उद्देशः न आसीत् तर्हि सः तादृश्याम् अपायकर्यां स्पर्धायां किमर्थं भागं गृहीतवान् ? 'स्पर्धायां जयेन एव मया कश्चित् अमूल्यः पुरस्कारः प्राप्तः अस्ति' इति यत् तेन उक्तं तत् कस्यचित् उन्मत्तस्य प्रलपनम् इव भासते खलु ? सुखेन प्राप्तां राजपदवीं किमर्थं परित्यक्तवान् सः ? किम् एतत् सर्वं विधेः विलसितम् इति अस्माभिः परिचिन्तनीयम् ? यदि विजयः राजकुमारीं

कमलमुखीं परिणीतवान् स्यात् तर्हि चन्द्रपुरस्य राजा अभविष्यत् । राज्यप्राप्तिः च पुरस्कारप्राप्तिः इव अभविष्यत् । किन्तु विजयः राज्यप्राप्तिं निराकृत्य अपि उक्तवान् यत् मया कश्चन पुरस्कारः प्राप्तः इति । तेन प्राप्तः सः पुरस्कारः कः ? लाभालाभयोः भेदम् एव न अवगतवान् वा सः ? मम एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति अवदत् ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''विजयः विकलाङ्गः सन् जन्म प्राप्तवान् । बाल्ये एव तस्य माता दिवङ्गता । तस्य विमाता तं निन्दति स्म - 'भवान् निष्प्रयोजकः, भूमेः भारभूतः, भवतः जीवनेन कोऽपि लाभः नास्ति' इति । प्रतिदिनं तं निन्दन्ती सा तस्य अवमाननं करोति स्म । एतादृशाः चिन्तयन्ति यत् - 'अवसरे प्राप्ते यत्किमपि महत् कार्यं कृत्वा सर्वेषां पुरतः श्रेष्ठत्वं सम्पादनीयम्' इति । तादृशः अवसरः विजयस्य जीवने राजकुमार्याः स्वयंवर-रूपेण आगतः । राजकुमार्याः विवाहः एव तस्य लक्ष्यं न आसीत् एव । विजयः जानाति स्म यत् अहं राजकुमार्याः अनुरूपः न इति । 'राज्यपरिपालनं तु सामान्यं कार्यं न, स्पर्धायां जयप्राप्तिः इव सुलभम् अपि न' इति सः जानाति स्म । हस्तद्वयेन विहीनः कथं वा खड्गं गृहीत्वा युद्धं कुर्यात् ? एतत् सर्वं जानन् सः राजकुमार्याः विवाहं निराकृतवान् । अत्र विधेः विपर्यासः कोऽपि नास्ति । सर्वेषां पुरतः श्रेष्ठः भवितुम् एव सः स्पर्धायां भागं गृहीतवान् । सर्वेषां श्लाघनरूपः पुरस्कारः तेन प्राप्तः आसीत् । अतः सः राजकुमार्याः विवाहं तिरस्कृत्य ततः गतवान् । अतः विजयः उन्मत्तः इति कथने किञ्चिदपि सामञ्जस्यं नास्ति'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखायां लम्बमानः स्थितवान् ।



# विश्वासपात्रता

सुन्दरराजः सोमदेवस्य गृहे उद्योगी आसीत् । सः सोमदेवे विशेषविश्वासं प्रदर्शयति स्म । दश वर्षाणि यावत् सः सोमदेवस्य गृहे कार्यं कृतवान् । तथापि सोमदेवः तस्य वेतनं न वर्धितवान् । अतः खिन्नः सुन्दरराजः सोमदेवगृहस्य कार्यं परित्यज्य दुर्गदेवस्य गृहे उद्योगं प्राप्तवान् । सोमदेवः यावत् वेतनं ददाति स्म ततोऽपि द्विगुणितं वेतनं ददाति स्म दुर्गदेवः ।

सोमदेवः सीतारामनामकम् अन्यं कञ्चित् उद्योगे नियोजितवान् । तम् उक्तवान् च - "सीताराम ! सुन्दरराजः दश वर्षाणि यावत् मम गृहे उद्योगित्वेन आसीत् । तथापि सः मयि विश्वासं न स्थापितवान् । अतः एव उद्योगं परित्यक्तवान् । उद्योगिनः स्वामिनि विश्वासं कुर्युः सदापि" इति ।

एकदा सीतारामः सुन्दरराजेन मिलित्वा - "भवान् सोमदेवगृहे दश वर्षाणि कार्यं कृतवान् खलु ? अतः तत्र कथं व्यवहरणीयम् इति विषये मां किञ्चित् वदतु" इति निवेदितवान् ।

"तद्विषये मया वक्तव्यं किमपि नास्ति । सोमदेवः सज्जनः । अतः भवान् तत्र कमपि क्लेशं न अनुभविष्यति" इति उक्तवान् सुन्दरराजः ।

"यदि सः सज्जनः स्यात् तर्हि भवान् किमर्थं तत्र क्रियमाणम् उद्योगं परित्यक्तवान् ? वस्तुतः तु भवता तस्मिन् विश्वासः न कृतः । अधिकवेतनप्राप्तीच्छया दुर्गदेवम् आश्रयता भवता उद्योगिसमुदायस्य एव अपमाननं कृतम्" इति उक्तवान् सीतारामः ।

"तथा किमपि नास्ति । विश्वासः तस्मिन् एव कर्तुं शक्यते, यश्च विश्वासपात्रं भवति । तादृशी विश्वासपात्रता नास्ति सोमदेवे । अतः मया तत्र कार्यं परित्यक्तम्" इति उक्तवान् सुन्दरराजः ।



समुद्रतीरप्रयाणम् - ५

# मुम्बापुरीं परितः ....

रचना - मीरा नायर्
चित्रम् - गौतमसेनः

*प्रथमं धूमशकटप्रयाणम्*

१८५३ तमे वर्षे एप्रिल् १६ दिनाङ्के भारतस्य प्रथमः धूमशकटमार्गः 'दि ग्रेट् इण्डियन् पेनिन्सुला रेल्वे' मुम्बयिनगरे आरब्धः । तद्दिने मध्याह्ने सार्धत्रिवादने ४०० जनैः प्रयाणिकैः सह बोरीबन्दरतः ठाणेपर्यन्तं धूमशकटेन चलितम् । धूमशकटं द्रष्टुं मार्गम् उभयतः सहस्रशः जनाः आश्चर्येण सम्मिलिताः आसन् । बोरीस्थानकं पूर्वमेव दृढकाष्ठैः निर्मितम् आसीत् । अग्रे तत्र एव सुन्दरतया विक्टोरियाटर्मिनस् निर्मितम् । ततः पूर्वं तत्र मुम्बयिनगरस्य अधिष्ठात्र्याः मुम्बादेव्याः आलयः आसीत् । इदानीं सः देवालयः त्रिकिलोमीटर्दूरस्थे अन्यस्मिन् प्रदेशे प्रतिष्ठापितः अस्ति ।

मुम्बयिनगरतः एलिफेण्टां प्रति यन्त्रचालितनौकया गन्तव्यम् । मार्गे एव "बुचर्-ऐलेण्ड्" दृश्यते । कदाचित् मुम्बयिनगरस्थेभ्यः ब्रिटिष्जनेभ्यः प्राणिनां मांसवितरणस्य कार्यं 'राबिन्' नामकः कश्चित् करोति स्म । तस्मात् तस्य प्रदेशस्य नाम 'बुचर् ऐलेण्ड्' इति प्रसिद्धम् अभवत् । इदानीम् एषः द्वीपः 'क्रूड् आयिल् ब्याङ्कर्' नौकानां स्थगनार्थम् उपयुज्यते ।

वैचित्र्यं नाम एलिफेण्टाप्रदेशे गजाः एव न दृश्यन्ते । मर्कटाः एव अधिकाः । षोडशे शतके यदा पोर्चुगीसाः अत्र आगतवन्तः तदा समुद्रतीरे काचित् गजाकारिका महती शिला दृष्टा ।



*विक्टोरिया टर्मिनस्*



अतः ते एतस्य प्रदेशस्य 'एलिफेण्टा' इति नामकरणं कृतवन्तः । ब्रिटिश्जनैः सा शिला, इदानीं जीजामाता-उद्यानम् इति यत् ख्यातम् अस्ति तत्र संस्थापिता अस्ति । जीजामाता-उद्यानस्य पूर्वतनं नाम 'विक्टोरिया गार्डन्' इति ।

नौकातः अवतीर्य अर्धकिलोमीटर् यावत् चलितं चेत् तत्र दीर्घाणि सोपानानि दृश्यन्ते । तानि अस्मान् शिलासु विकसितानां शिवमन्दिराणां समुदायं प्रति नयन्ति । तत्रत्याः महागुहालयाः अस्मान् आकर्षन्ति । मानवनिर्मितायाः एतस्याः गुहायाः प्रवेशार्थं द्वारत्रयम् अस्ति । एकस्य द्वारस्य अभिमुखं ५४५ मीटर् परिमिते उन्नते स्थले त्रिभिः शिरोभिः विराजमानस्य शिवस्य विग्रहः अस्ति । सृष्टि-स्थिति-लयादीनां कारणकर्ता शिवः इति एतम् अंशं द्योतयति एषः त्रिमूर्ति-विग्रहः ।

गुहायां भित्तेः उपरि कानिचन पौराणिकभित्तिचित्राणि चित्रितानि सन्ति । चित्रे रावणः कैलासगिरेः उन्नयनार्थं प्रयतमानः दृश्यते । शिवः तु अविचलः सन् पार्वत्या सह उपविष्टवान् दृश्यते । पादाङ्गुष्ठेन कैलासगिरिम् प्रणुद्य स्थितस्य

*आलयस्थेषु शिथिलेषु विग्रहेषु अन्यतमः विग्रहः*



*एलिफण्टास्थः सुप्रसिद्धः सृष्टि-स्थिति-लय-द्योतकः त्रिमूर्तिविग्रहः*



शिवस्य चित्रं तु अत्यन्तं रमणीयम् अस्ति। शिवपार्वत्योः विवाहः, शिवस्य अर्धनारीश्वररूपं, गङ्गावतरणस्य घट्टः इत्यादीनां घटनानां निरूपकाणि भित्तिचित्राणि इदानीम् अपि कान्तियुक्ततया विराजन्ते। शिवरात्रिदिने, शिवसम्बद्धेषु पर्वदिनेषु च अत्र महान् सम्मर्दः भवति। तदा विविधविपण्यः रचिताः भवन्ति। सायं सांस्कृतिककार्यक्रमाः अपि प्रचलन्ति।

महागुहातः अनतिदूरे शिथिलं गुहाद्वयम् अस्ति। 'सीताबायीदेवळ'-नामिका काचित् गुहा अपि तत्र अस्ति। अत्र कदाचित् सुन्दरं द्वारम्, अमृतशिलामयः मण्डपः च आसीत्। एषा इतराः गुहाः इव जीर्णा न।



अन्तः मण्डपे शिलासु चित्रिताः स्तम्भाः

एलिफेण्टायाः दक्षिणदिशि कोङ्कणतीरे मुम्बयी-निवासिभिः अभिमानपूर्वकं कथ्यमानम् 'अलिबाग् बीच् रिसार्ट्' अस्ति। अलीबाग् प्रसिद्धं नौका-स्थानकम्। सप्तदशे शतके तस्मिन् प्रदेशे कूपानां खननं कृत्वा उद्यानानि निर्मितवान् आसीत् अलिबाग्-नामकः कश्चन धनिकः मोहम्मदमतानुयायी। तस्मात् अलीबाग् इति नाम प्रख्यातम् अभवत्। तेन निर्मितानि उद्यानानि इदानीमपि सन्ति। अत्रत्याः नारिकेलाः, शुकचञ्च्वाकारकाः आम्राः च कोङ्कण-प्रदेशे अत्यन्तं प्रसिद्धाः।

अलिबाग्-जनपदे 'चावूल्' इति किञ्चन नगरम् अस्ति। पूर्वकाले एतत् नगरं चम्पावती इति,



शिवपार्वतीविवाहः



कैलासगिरिवासी शिवः



रेवतीक्षेत्रम् इति च प्रसिद्धम् आसीत् ।

तत्काले रोमदेशेन सह वाणिज्य-व्यवहारः अपि इतः प्रचलति स्म । चतुर्दशे शतके अपि एतत् अत्यन्तं प्रसिद्धं नौकास्थानम् आसीत् । पोर्चुगीसैः यदा आक्रान्तं तदारभ्य एतस्य प्रदेशस्य चावूल् इति नाम प्रसिद्धम् अभवत् । सुन्दरं नौकास्थानम् इति, अतिमूल्यवतां वस्तूनां वाणिज्यकेन्द्रम् इति च इदानीम् एतत् प्रख्यातम् अस्ति ।

*अलीबाग्प्रदेशस्थः समुद्रतटः*

एतस्य दक्षिणदिशि कतिचन-किलोमीटर्-दूरे शिलामये द्वीपे जञ्जीरादुर्गम् अस्ति । दुर्गस्य भित्तयः समुद्रस्तरतः १५ मीटर्-औन्नत्ययुक्ते स्थले सन्ति । एतत् दुर्गं १७०७ तमे वर्षे मालिक् अम्बर् नामकः कश्चित् अबिसीनीयादेशीयः निर्मितवान् । अबिसीनीया(एथियोपीया)तः आगतः कश्चित् महाराष्ट्रे कथं दुर्गं निर्मितवान् इति आश्चर्यं भवति खलु । एतस्य पृष्ठभूमिका एवम् अस्ति -

१४८९ तमे वर्षे अबिसीनीयातः आगतः कश्चित् साहसी यात्रिकः आत्मानं 'वणिक्' इति परिचाययन् स्वस्य ३०० पेटिकाः अवतारयितुं तस्य प्रदेशस्य राज्ञः अनुमतिं प्राप्तवान् । तासु पेटिकासु सैनिकाः आसन् इत्येषः विषयः राज्ञा न अवलोकितः । एवम् उपायेन अबिसीनीया-सैनिकाः द्वीपम् आक्रान्तवन्तः । तत्रैव दुर्गमेकं निर्मितं तैः । १९४७ तमे वर्षे एषः द्वीपः भारते विलीनः अभवत् । तावत्पर्यन्तम् एतत् दुर्गं पोर्चुगीसानाम् अधीनम् एव आसीत् । अबिसीनीयाजनाः आत्मानं 'सयद्'जनाङ्गीयाः इति परिचाययन्ति । ते एव कालक्रमेण 'सिद्धिजनाः' इति प्रसिद्धाः अभवन् । अरबिक्भाषायां 'जजीरा'पदस्य द्वीपः इति अर्थः । क्रमशः एतस्य जजीरादुर्गस्य जञ्जीरा इति नामान्तरं प्रसिद्धम् अभवत् ।





# मातृगृहदेवताप्रभावः

कस्मिंश्चित् सामान्ये कुटुम्बे जातायाः स्वर्णलतायाः बाल्यात् आरभ्य आभरणानां विषये महान् व्यामोहः आसीत्। तस्याः गृहजनाः न तावत् धनिकाः। यदा सा प्राप्तवयस्का जाता तदा तस्याः मातापितरौ, भूस्वामिनः कार्यालये लिपिकाररूपेण कार्यं कुर्वता वेङ्कटरमणेन सह पुत्र्याः विवाहं निर्वर्तितवन्तौ। पतिगृहम् आगतवती स्वर्णलता 'आभरणानि कारयतु' इति तदा तदा पतिं पीडयितुम् उद्युक्ता अभवत्। आरम्भदिनेषु कामपि प्रतिक्रियां न प्रकटितवान् वेङ्कटरमणः। किन्तु गच्छता कालेन पत्नीपीडां सोढुम् अशक्तः सः "अस्माकं योग्यतानुगुणं आभरणानि भवत्याः समीपे सन्ति एव। भवत्या अपेक्षितं वज्रहारं सूर्यचन्द्रहारं च कारयितुम् अहं भूस्वामी न। भूस्वामिनः कार्यालये अतिसामान्यः कश्चन लिपिकारः अहम्। विद्यमानेन आनुकूल्येन एव तृप्तिः अनुभोक्तव्या। अतः सुवर्णव्यामोहं परित्यजतु भवती" इति पत्नीं बोधितवान्। अनन्यगतिका स्वर्णलता मौनम् आश्रितवती। किन्तु तस्याः आभरणानां व्यामोहः न अपगतः। मनसि एव खेदम् अनुभवन्ती आसीत् सा।

कानिचन वर्षाणि अतीतानि। स्वर्णलतायाः एकमात्रेण पुत्रेण गोविन्देन उत्तमः उद्योगः लब्धः। वेङ्कटरमणेन अस्वस्थेन सता उद्योगः परित्यक्तव्यः अभवत्। सः गृहे एव भवति स्म।

पुत्रः उत्तमे उद्योगे अस्ति इति कारणतः स्वर्णलतायाः सुवर्णस्य आशा पुनश्च पल्लविता अभवत्। 'पुत्रस्य विवाहसमये प्रभूतं धनं वरदक्षिणारूपेण स्वीकृत्य सुवर्णहारादिकं कारणीयम्' इति चिन्तितवती सा। किन्तु तस्याः चिन्तनात्



भिंन्नतया एव गोविन्दस्य विवाहः सम्पन्नः अभवत् । कदाचित् गोविन्दः मित्रस्य विवाहार्थं दूरस्थं कञ्चित् ग्रामं गतवान् आसीत् । विवाहसमारम्भे उपस्थितया कमलानामिकया युवत्या आकृष्टः अभवत् गोविन्दः । समीपे कोऽपि उत्तमः मुहूर्तः न आसीत् इति कारणतः सः कमलायाः मातापित्रोः अनुमतिं प्राप्य मित्रस्य विवाह-मुहूर्तसमये एव कमलां परिणीतवान् । तया सह गृहम् आगतवान् च ।

कमलां दृष्ट्वा आश्चर्यचकितां मातरम् उद्दिश्य गोविन्दः - "अम्ब, एषा भवत्याः स्नुषा । आशीर्वादं करोतु भवती" इति वदन् मातरं नमस्कर्तुम् उद्युक्तः अभवत् ।

तदा स्वर्णलता कोपेन पृष्ठतः गच्छन्ती - "दुर्बुद्धे, एषा भवतः पत्नी स्यात् नाम । किन्तु मम स्नुषा तु न" इति उक्तवती ।

पार्श्वे एव स्थितः कमलायाः पिता - "तथा कोपं मा करोतु भगिनि ! वरदक्षिणां दातुं वयम् असमर्थाः इति ज्ञातं चेत् अपि मम पुत्र्याः सौन्दर्येण सौशील्येन च आकृष्टः विशालहृदयः भवत्याः पुत्रः गोविन्दः तां परिणीतवान् अस्ति" इति उक्तवान् ।

"एवं तर्हि आहारस्यापि अभावः यत्र अस्ति तादृशात् निर्गतिकात् कुटुम्बात् आगता एषा !" इति तिरस्कारेण उक्तवती स्वर्णलता ।

तदा कमलायाः माता मध्ये प्रविश्य - "ज्येष्ठानां भवताम् अनुपस्थितौ विवाहः प्राचलत् इति तु दोषाय एव । तदर्थं क्षमां प्रार्थयामः वयम् । उत्तममुहूर्तः सद्यःकाले न आसीत् इति कारणतः गोविन्दस्य अपेक्षायाः अनुगुणम् अस्माभिः विवाहः निर्वर्तितः । अतः कृपया क्षाम्यतु भवती" इति स्वर्णलतायाः हस्तौ गृहीत्वा प्रार्थितवती ।

स्वर्णलता स्वस्य हस्तौ प्रत्याकर्षन्ती - "निर्गतिकाः भवन्तः किमपि मा प्रलपन्तु । पुत्रीम् अत्र त्यजन्तु । विनाशब्दम् इतः निर्गच्छन्तु च । अलं सम्भाषणेन" इति क्रोधेन उक्तवती ।

कमलायाः मातापित्रोः बन्धूनां च नेत्रे अश्रुपूर्णे आस्ताम् । करुणापूर्णदृष्ट्या कमलां सकृत् दृष्ट्वा ते ततः निर्गताः ।

स्वर्णलतायाः पतिः वेङ्कटरमणः तदा ग्रामे न आसीत् । हिमालयतः आगतः कश्चन संन्यासी चतुर्योजनपरिमिते दूरे कस्मिंश्चित् ग्रामे तिष्ठति इति श्रुत्वा तं संन्यासिनं द्रष्टुं गतवान् आसीत् सः । 'घोरम् अपि व्याधिं सकृत् औषधदानेन निवारयति' इति संन्यासिनः विषये किंवदन्ती आसीत् । तत् श्रुत्वा एव आशया तत्र गतवान् आसीत् वेङ्कटरमणः । अनन्तरदिने प्रत्यागतः सः गोविन्दद्वारा प्रवृत्तं सर्वं ज्ञात्वा - ''मम भाग्यं सम्यक् नास्ति । गतसप्ताहे एव संन्यासी ततः गतवान् इति श्रुतम् । आस्तां तावत् स च विषयः । मातुः स्वभावं सम्यक् जानता अपि भवता एवं विवाहः किमर्थं निर्वर्तितः ? इदानीं सर्वं क्लेशाय जातम्'' इति चिन्तामिश्रितेन स्वरेण उक्तवान् ।

स्वर्णलता स्नुषायाः विषये नितरां कोपयुक्ता आसीत् । अतः सप्ताहाभ्यन्तरे कर्मकरीम् उद्योगतः निष्कासितवती सा सर्वाणि अपि कार्याणि कमलाद्वारा एव कारयितुम् उद्युक्ता अभवत् । न केवलं तावत्, कदाचित् स्नुषाम् आहूय - ''भवती वरदक्षिणादानं विना महाराज्ञी इव वैभवजीवनम् अनुभवितुम् आगतवती वा ? तत् अत्र न शक्यते । अद्य आरभ्य दिने भोजनं नास्ति भवत्याः । रात्रिमात्रे पत्या सह भोजनं करणीयं भवत्या । एषः विषयः कुत्रापि न वक्तव्यः । मम पुत्रः भवत्याः द्वारा एतं विषयं जानाति चेत् भवत्याः



विषये चौर्यकरणारोपं कृत्वा भवतीं शाश्वतरूपेण मातृगृहं प्रति प्रेषयिष्यामि । स्मरतु तावत्'' इति गर्जनस्वरेण उक्तवती ।

दिने केवलेन सकृद्भोजनकरणेन सप्ताहाभ्यन्तरे कमला कृशा अभवत् । एतत् लक्षितवान् गोविन्दः पत्नीम् उद्दिश्य - ''किं भोः, दिने दिने कृशा जायमाना अस्ति खलु भवती ? किमर्थम् एवम् ?'' इति पृष्टवान् ।

तदा एव तत्र आगता स्वर्णलता - ''मातुः स्मरणं कुर्वती भवतः पत्नी कृशा जाता स्यात् । तां मातृगृहं प्रापय्य आगच्छतु भवान्'' इति पुत्रम् आदिष्टवती । शिरश्चालनपूर्वकम् अङ्गीकारं सूचितवान् गोविन्दः ।



सहस्रं पुलाकाः खाद्यन्ते चेत् एकः सुवर्णमयः पुलाकः प्राप्यते भवत्या । तदर्थं भवत्या स्थालिकाक्षालनानन्तरं स्थालिकायाः न्यञ्चनं कृत्वा स्थापनीयम् । स्थालिकायाः अधः सुवर्णकणाः दृष्टिगोचराः भवन्ति । अतः इतःपरं भवत्याः श्वश्रूः भवत्यै पूर्णोदरं भोजनं दास्यति एव'' इति उक्तवती ।

अनन्तरदिने 'मातृगृहं गच्छतु' इति वदन्तीं श्वश्रूं प्रवृत्तं सर्वं निवेदितवती कमला । किन्तु 'पिशाची' इति कथनस्य स्थाने 'मातृगृहदेवता' इति उक्तवती आसीत् स्वर्णलता । सर्वं श्रुत्वा सन्देहदृष्ट्या स्नुषां पश्यन्ती स्वर्णलता - ''एवं वा ? सत्यं वदति खलु भवती ? भवत्या उच्यमाना सा देवता किं मार्गभ्रष्टा आसीत् ? अत्र आगमनानुक्षणं भवत्या यदि उक्तं स्यात् तर्हि एतावता सुवर्णहारम् अकारयिष्यम् । भवत्याः देवता अद्य मार्गं ज्ञातवती इति भाति । तत् भवतु । मातृगृहगमनकार्यक्रमं स्थगयतु भवती'' इति उक्तवती ।

तद्दिने रात्रौ सर्वेषां शयनानन्तरं स्नुषायाः स्थालिकाम् उन्नीय दृष्टवती स्वर्णलता । सुवर्णपुलाकद्वयं तत्र आसीत् । तत् दृष्ट्वा स्वर्णलता सन्तुष्टा अभवत् । तदारभ्य स्नुषायै दिने त्रिवारं भोजनदानम् आरब्धवती सा । मासाभ्यन्तरे ताटङ्कं कारितवती स्वर्णलता । 'मातृगृहं सर्वथा विस्मरतु भवती' इति स्नुषाम् आदिष्टवती च ।

एवं स्वर्णलतायाः आशा दिने दिने

तद्दिने रात्रौ निद्राम् अप्राप्तवती कमला उत्थाय वाटिकायां विद्यमानायां कस्याञ्चित् वितर्दिकायाम् उपविश्य श्वश्र्वाः पीडनं स्मरन्ती दुःखेन रोदनम् आरब्धवती । तदा पार्श्वस्थात् वृक्षात् पर्णानां शब्दः तया श्रुतः । किञ्चिदिव भीता कमला उपरि दृष्टिं प्रसारितवती । वटवृक्षात् काचित् पिशाची तस्याः पुरतः उत्प्लुत्य - ''भयं मास्तु भद्रे ! भवत्याः साहाय्यं कर्तुम् एव आगता अस्मि । किमर्थं भवती दुःखिता अस्ति ?'' इति पृष्टवती ।

पिशाच्याः वचनेन किञ्चिदिव धैर्यं प्राप्य कमला श्वश्र्वा क्रियमाणां पीडां विवृतवती । सर्वं श्रुत्वा पिशाची क्षणं यावत् विचिन्त्य - ''भवतु, अद्य आरभ्य

प्रवर्धमानतां गता । कमलया 'उदरं पूर्णम्' इति उक्तं चेत् अपि 'इतोऽप्यधिकं खादनीयं भवत्या' इति सानुरोधं वदन्ती पुनरपि अन्नं परिवेषयति स्म स्वर्णलता ।

कदाचित् रात्रौ उदरवेदनया पीड्यमाना कमला मातापितरौ स्मरन्ती उद्याने वितर्दिकायाम् उपविष्टवती आसीत् । तदा पुनश्च पिशाची तस्याः पुरतः प्रत्यक्षा अभवत् । ताम् उद्दिश्य - "पुनः किं कष्टम् आपतितम् ?" इति पृष्टवती च ।

कमला प्रवृत्तं सर्वं विवृतवती । तदा पिशाची - "इतः परं पुलाकाः सुवर्णमयाः न भविष्यन्ति । किन्तु भवत्याः श्वश्रूः भोजनं त्यजति चेत् तस्याः स्थालिकायाः अधः एकं सुवर्णनाणकं भविष्यति" इति उक्त्वा ततः अदृश्या अभवत् ।

प्रातः कमला यदा विषयम् उक्तवती तदा स्वर्णलता - "तर्हि भवत्याः उपस्थितिः अत्र किमर्थम् ? वृथा किमर्थं भवत्यै भोजनं दातव्यम् ?" इति वदन्ती भाटकशकटेन तां मातृगृहं प्रति प्रेषितवती ।

तद्दिने मध्याह्ने भोजनं न कृतवती सा । तस्य परिणामतः तया रात्रौ स्थालिकायाः अधः प्रकाशमानं सुवर्णनाणकं प्राप्तम् । अतः द्वितीये दिने रात्रौ अपि सा भोजनं न कृतवती । ततः द्वितीयं सुवर्णनाणकं प्राप्तं तया । एतेन नूतनः कश्चन विचारः तस्याः मनसि प्रविष्टः । 'जन्मतः भोजनं कुर्वाणा एव अस्मि । दश दिनानि यावत् भोजनं त्यजामि चेत् किं भवेत् ? विंशतिः सुवर्णनाणकानि प्राप्येरन् । तैः सुन्दराणि आभरणानि कारयित्वा सद्यः एव



प्रचलिष्यमाणे बन्धोः विवाहे धृत्वा मात्रे भगिनीभ्यः अन्येभ्यश्च प्रदर्शयिष्यामि' इति चिन्तितवती सा ।

अतः सा भोजनमेव त्यक्तवती । एतत्कारणतः तृतीये दिने स्थालिकायाः अधः विद्यमानं नाणकम् आनेतुम् अपि असमर्था अभवत् सा । एतस्यां परिस्थितौ पुनः कश्चन विचारः तस्याः मनसि प्रविष्टः । सा पुत्रम् आहूय - "भवान् अनुक्षणं वैद्यस्य चण्डाचार्यस्य समीपं गत्वा 'यवागूः खादिता चेत्, भोजनेन यादृशः परिणामः भवति तादृशः एव परिणामः भवति वा न वा इति पृष्ट्वा आगच्छतु" इति क्षीणस्वरेण उक्तवती ।

एतस्याः विचित्रः सन्देहः इति चिन्तयन् गोविन्दः वैद्यसमीपं गत्वा सर्वं पृष्टवान् । तदा चण्डाचार्यः - "जलात् ऋते यत् किमपि सेवितं चेत् अपि तत् भोजनायते एव" इति उक्तवान् ।

वैद्यं पृष्ट्वा यदा सः गृहम् आगतवान् तदा तदीया माता मूर्च्छावस्थायाम् आसीत् । पार्श्वगृहीयाः वैद्यम् आनीतवन्तः आसन् । 'मातुः चिकित्सां सम्यक् कारयतु' इति पितरम् उक्त्वा श्वशुरगृहं गत्वा गोविन्दः सायङ्कालाभ्यन्तरे पत्नीम् आनीतवान् ।

कमला श्वश्र्वाः स्थितिं दृष्ट्वा बहु दुःखम् अनुभूतवती । तस्याः नेत्राभ्याम् अश्रूणि आगतानि । रोदनं कुर्वती एव सा - "किम् अभवत् अम्ब ?" इति पृष्टवती ।

स्वर्णलता आत्मीयतया स्नुषायाः शिरः स्पृशन्ती प्रवृत्तं सर्वं निवेद्य उक्तवती - "जीवत्-सुवर्णसदृशी स्नुषा भवती एव गृहे आसीत् । तथापि मूर्खा अहं निष्प्रयोजकस्य सुवर्णस्य विषये व्यामोहं प्राप्तवती । ततः प्राणापायः एव सम्मुखीकरणीयः अभवत् । वृद्धायाः मम किमर्थम् आभरणानि ? तेन सुवर्णेन भवती एव आभरणानि कारयतु । किन्तु मम पतिं मा वदतु । सः मम उपहासं कुर्यात्" इति ।

अनन्तरं स्नुषया कृतया सेवया मासाभ्यन्तरे पूर्ववत् आरोग्यवती भूत्वा सुखेन जीवितवती स्वर्णलता ।





# भेदः

पूर्वं कदाचित् कश्चन राजा धर्मेण राज्यं परिपालयन् आसीत् । 'आदर्शराजः' इति तस्य कीर्तिः सर्वत्र प्रसृता आसीत् ।

कदाचित् सः राजा मृगयार्थम् अरण्यं गतवान् । मृगयायां लीनः सः घोरारण्ये मार्गभ्रष्टः सन् पिपासया बुभुक्षया च कस्यचित् मुनेः आश्रमं प्राप्तवान् ।

मुनिः नेत्रे निमील्य ध्यानासक्तः आसीत् । राजा तं साष्टाङ्गं प्रणम्य - "महात्मन्, मार्गभ्रष्टः सन् अहं पिपासया बुभुक्षया च पीड्यमानः अस्मिन् घोरारण्ये भ्रमन् अस्मि । भवतः आश्रमे किञ्चित्कालं यावत् विश्रान्तिसुखम् अनुभवितुम् अवकाशः किं प्राप्येत ?" इति विनयेन पृष्टवान् ।

तदा मुनिः नेत्रे निमील्य एव - "अवश्यं भवान् विश्रान्तिम् अत्र अनुभवितुम् अर्हति । एतस्य देशस्य परिपालकः राजा धर्मात्मा अस्ति । अतः पिपासाबुभुक्षयोः चिन्ता एव नास्ति एतस्मिन् देशे । आश्रमे विद्यमानं यत्किञ्चित् फलं पर्णं वा भवान् खादति चेदपि तत् रुचिकरम् एव भवति । अतः यस्यकस्यचित् वा फलस्य पर्णस्य वा खादनेन भवान् स्वस्य बुभुक्षां निवारयितुम् अर्हति" इति उक्तवान् ।

आश्चर्यचकितः राजा वृक्षे विद्यमानं किञ्चन फलम् अवचित्य मुखे स्थापितवान् । तत् फलं रुचिकरं मधुरं च आसीत् । अतः राज्ञः बुभुक्षा पिपासा च निवारिता अभवत् । मानसिकीं शारीरकीं च शान्तिं प्राप्तवान् सः ।

किञ्चित्कालं यावत् विश्रान्तिम् अनुभूय आनन्देन राजधानीं प्रत्यागतवान् राजा । सः प्रासादं गत्वा चिन्तितवान् यत् 'मम धर्मपरिपालनस्य विषयः सर्वैः यथा ज्ञायेत तथा करणीयम्' इति । अतः सः एकदा

स्वाधीनान् राजानः, उन्नताधिकारिणः, पुरप्रमुखान् च भोजनार्थम् आहूतवान् । 'भोजनार्थं निम्बपर्णानाम् उपसेचनं, कारवेल्लस्य पायसं च कुर्वन्तु' इति पाचकान् आदिष्टवान् च ।

'केनापि विशिष्टेन उद्देशेन राज्ञा एवं सूचितं स्यात्' इति मत्त्वा पाचकाः राज्ञः सूचनायाः अनुगुणम् एव पाकं सज्जीकृतवन्तः । राजा अतिथिभिः सह भोजनार्थम् उपविष्टवान् । किन्तु तस्य अवमानः एव अभवत् । यतः तेन कारितः पाकः अत्यन्तं तिक्तः आसीत् ।

अनुक्षणं भोजनं स्थगयित्वा पुनश्च पाकं कारयित्वा सर्वेषां कृते भोजनव्यवस्थां कारितवान् राजा । एतेन राज्ञः मानः तु रक्षितः अभवत् । किन्तु 'किमर्थम् एवम् अभवत् ? मुनेः आश्रमे किमर्थं फलानि मधुराणि आसन् ? अत्र किमर्थं तिक्तानि अभवन् ?' इत्येतादृशानां प्रश्नानाम् उत्तरं तु न प्राप्तं राज्ञा । 'पाचकानां दोषः स्यात् वा' इति संशयेन राजा निम्बपर्णं, कारवेल्लं च आस्वादितवान् । तदुभयमपि तिक्तमेव आसीत् । एतेन 'पाचकानां दोषः तु नास्ति' इति ज्ञातवान् राजा ।

प्रवृत्तस्य कारणं ज्ञातुम् इच्छन् राजा अनुक्षणं ततः प्रस्थाय मुनेः आश्रमं प्राप्तवान् । मुनिं प्रवृत्तं सर्वं निवेद्य - "स्वामिन्, तद्दिने सर्वं रुचिकरम् आसीत् । किन्तु अद्य सर्वस्य अपि फलस्य स्वलक्षणानि एव दृष्टिगोचराणि जातानि सन्ति । एतस्य रहस्यं किम् ? कृपया विवृणोतु" इति उक्तवान् ।

तदा मुनिः - "तदा भवान् एव राजा इति अजानन् अहं भवतः धर्मशीलतां श्लाघितवान् । अतः भवति अहङ्कारः उत्पन्नः । आत्मनः महिमानं परीक्षितुम् इष्टवान् भवान् । महिमानः स्वयं प्रकाशन्ते । परीक्षायाः स्पर्धायाः वा विषयाः न ते" इति उक्तवान् ।

तदा राजा क्षमां सम्प्रार्थ्य स्वराजधानीं प्रत्यागतवान् । अहङ्कारं सर्वथा परित्यक्तवान् च ।





# महाभारतम्

मध्यरात्रसमये जरासन्धः अतिथीनां वचनं स्मरन् यज्ञशालाम् आगत्य कृष्णम् उद्दिश्य - ''स्वामिन्, भवन्तः सर्वे स्नातकाः इव दृश्यन्ते । स्नातकाः पुष्पमालां न धरन्ति । गन्धलेपनं न कुर्वन्ति । किन्तु भवन्तः पुष्पमालां धृतवन्तः सन्ति । गन्धेन लेपनं कृतवन्तः सन्ति अपि । भवतां भुजयोः धनुषः धरणेन जातानि चिह्नानि दृश्यन्ते । भवन्तः अस्माकं नगरम् ऋजुमार्गेण अपि न प्रविष्टवन्तः । अन्यमार्गेण आगतवन्तः । ब्राह्मण-वेषधारिणः क्षत्रियाः इव दृश्यन्ते भवन्तः । सत्यं वदन्तु, भवन्तः के ? कुतः आगताः ? किमर्थम् अत्र आगताः ?'' इति पृष्टवान् ।

तदा कृष्णः उक्तवान् - ''ब्राह्मणाः क्षत्रियाः वैश्याः च स्नातकाः भवितुम् अर्हन्ति । वयं क्षत्रियस्नातकाः । महिमबलात् वयं ब्राह्मणाः इव दृश्यामहे । मित्रस्य गृहं साक्षान्मार्गेण, शत्रोः गृहं परोक्षमार्गेण च प्रवेष्टव्यम् इति ज्येष्ठाः वदन्ति । भवान् अस्माकं शत्रुः । अतः परोक्षमार्गेण वयं भवतः क्षेत्रं प्रविष्टवन्तः । भवता सह वैरत्वम् अस्ति इति कारणतः भवता क्रियमाणा पूजा अस्माभिः निराकृता । अस्माकं बाहुबलं शौर्य-पराक्रमादयः च भवते प्रदर्शनीयाः इति उद्देशेन वयम् अत्र आगतवन्तः स्मः'' इति ।

तदा जरासन्धः कृष्णम् उद्दिश्य - ''बहुधा चिन्तितं चेत् अपि भवतां द्वेषस्य



कारणम् अहं न ज्ञातवान् । अहं कथं भवतां शत्रुः भवेयम् ? निरपराधिनं मां शत्रुं मन्यन्ते खलु भवन्तः ? कथम् एतत् ? किम् एतत् धर्मविरुद्धं न ?'' इति पृष्टवान् ।

तदा कृष्णः - ''कश्चित् महापुरुषः स्वस्य कुलधर्मस्य आचरणार्थं भवता सह योद्धुम् अस्मान् अत्र प्रेषितवान् अस्ति । अनेकान् राज्ञः बन्धने स्थापयित्वा एकैकशः प्रतिदिनं भैरवाय बलिरूपेण अर्पयन् भवान् कथं निरपराधी भवितुम् अर्हति ? एषः कीदृशः धर्मः ? भवता ये पीड्यमानाः सन्ति तान् रक्षितुम् एव वयम् आगताः । भवान् इव दुष्टकार्याणि कृत्वा कार्तवीर्यार्जुनः विनाशं प्राप्तवान् । बन्धने स्थितान् राज्ञः मोचयित्वा मनुष्यः इव व्यवहरतु । नो चेत् अस्माभिः सह युद्धं करोतु ।'' इति उक्तवान् ।

''भवन्तः न ब्राह्मणाः, अपि तु क्षत्रियाः इति ज्ञातम् । युद्धार्थम् आगताः इत्यपि ज्ञातम् । इतः परं किं नामगोपनेन ? नामधामादिकं वदन्तु तावत्'' इति उक्तवान् जरासन्धः ।

तदा श्रीकृष्णः हसन् - ''यदि अस्माकं परिचयस्य प्राप्तौ एव भवतः विशेषकुतूहलं तर्हि श्रृणोतु तावत् । अहम् अस्मि श्रीकृष्णः ! एतौ च भीमार्जुनौ'' इति उक्तवान् ।

कृष्णस्य वचनं श्रुत्वा कुपितः जरासन्धः - ''मया पराक्रमेण बद्धाः राजानः भवद्विषयकभयेन विमोक्तव्याः वा ? मया सह युद्धं करणीयम् एव इति यदि भवताम् इच्छा तर्हि सैन्यम् आनाययन्तु । अथवा भवद्भिः सहैव युद्धं भवतु । भवत्सु एकेन सह वा, सर्वैः सह वा योद्धुम् अहं सिद्धः'' इति उक्तवान् ।

अनन्तरं जरासन्धः पुत्रस्य सहदेवस्य पट्टाभिषेकं कृत्वा युद्धार्थं सन्नद्धः सन् आगतवान् ।

''युद्धार्थम् अस्मासु यं कमपि चिनोतु'' इति उक्तवान् कृष्णः । अहङ्कारी जरासन्धः भीमं चितवान् । स्वस्य किरीटं निष्कास्य केशान् बद्ध्वा भीमेन सह युद्धार्थं सन्नाहम् आरब्धवान् सः । तदनन्तरम् उभौ अपि मदगजौ इव मल्लयुद्धम् आरब्धवन्तौ । नगरस्थाः विविधवर्गीयाः जनाः

मल्लयुद्धदर्शनार्थम् आगतवन्तः । मल्लयुद्धं कार्तिकशुक्ल-प्रतिपदः त्रयोदशीपर्यन्तं प्राचलत् ।

चतुर्दश्यां कृष्णः भीमम् उद्दिश्य - "भीम, इदानीं जरासन्धः शक्तिहीनः जातः अस्ति । अद्य एव केनचित् उपायेन तं मारयतु" इति उक्तवान् ।

कृष्णस्य वचनेन नवोत्साहं प्राप्तवान् भीमः जरासन्धं सहजतया वशीकृत्य सिंहः इव गर्जन् तं मारितवान् । शवस्य पादौ गृहीत्वा आकर्षन् राजगृहस्य द्वारसमीपे क्षिप्तवान् ।

अनन्तरं कृष्णार्जुनौ कारागृहं गत्वा जरासन्धेन बलात् बद्धान् सर्वान् राज्ञः विमोचितवन्तौ ।



गिरिव्रजस्य ब्राह्मणाः त्रीन् अपि आशीर्भिः अनुगृहीतवन्तः । कारागृहात् विमुक्ताः राजानः कृष्णाय धन्यवादान् समर्पितवन्तः ।

कृष्णः तान् उद्दिश्य - "अयि भोः राजानः, धर्मराजः राजसूययागं कुर्वन् अस्ति । भवद्भिः तस्य साहाय्यं करणीयम्" इति उक्तवान् । सर्वे सन्तोषेण एतं प्रस्तावम् अङ्गीकृतवन्तः ।

जरासन्धस्य पुत्रः सहदेवः उपायनादिकं स्वीकृत्य पुरोहितेन सह कृष्णस्य समीपम् आगतवान् । कृष्णः तेन आनीतम् उपायनं स्वीकृत्य तं 'मगधदेशस्य राजा' इति उद्घोषितवान् ।

अनन्तरं कृष्णः जरासन्धस्य रथे भीमार्जुनौ उपवेश्य इतरैः राजभिः सह इन्द्रप्रस्थम् आगतवान् । धर्मराजेन मिलित्वा - "दैवानुग्रहेण भवतः अनुजौ सकुशलं प्रत्यागतवन्तौ । मल्लयुद्धे भीमेन जरासन्धः मारितः । एते सर्वे जरासन्धेन कारागृहे स्थापिताः राजानः" इति विवृतवान् । धर्मराजः समानादरेण सर्वान् सत्कृत्य प्रेषितवान् । अनन्तरं कृष्णः जरासन्धस्य रथम् आरुह्य द्वारकां प्रतिगतवान् ।

केषाञ्चित् दिनानाम् अनन्तरम् अर्जुनः धर्मराजम् उद्दिश्य - "मम समीपे गाण्डीव-धनुः, अग्निदेवेन दत्तः रथः, विशिष्टानि अस्त्राणि च सन्ति । अतः दिग्विजयार्थं गत्वा राज्यस्य धनकोषं पूरयिष्यामि ।



भीमादयः अपि दिग्विजये अतीव उत्सुकाः सन्ति । यदि वयं सर्वे दिग्विजययात्रां कुर्याम तर्हि कोषः विना क्लेशं पूर्णः भवेत्'' इति उक्तवान् ।

अर्जुनस्य वचनेन सन्तुष्टः धर्मराजः उत्तमे मुहूर्ते उत्तरदिशि अर्जुनं, दक्षिणदिशि भीमं, पूर्वदिशि सहदेवं, पश्चिमदिशि नकुलं च प्रेषितवान् । स्वयं धर्मराजः राजधान्यां स्थित्वा राज्यभारं निरूढवान् ।

उत्तरदिशि गतः अर्जुनः प्रथमं पुलिन्दराजं जितवान् । ततः अनर्तः, कालकूटः, कुलिन्दः, सुमण्डलः इत्यादीनां देशानां राज्ञः अपि सः जितवान् । ततः सः शाकलद्वीपं प्रति गतवान् ।

महापराक्रमी शाकलद्वीपस्य राजा प्रतिविन्ध्यः अपि पराजयं प्राप्तवान् । प्राग्जोतिषपुरस्य राज्ञः भगदत्तस्य परिवारे किरातकाः नीचाः च आसन् । भगदत्तः अर्जुनेन सह अष्ट दिनानि यावत् युद्धं कृत्वा जयं प्राप्तुम् अशक्नुवन् अन्ते स्नेहपूर्वकं सन्धिं कृतवान् ।

अर्जुनः भगदत्तम् उद्दिश्य - ''मम अग्रजः धर्मराजः राजसूययागं कृत्वा साम्राज्यस्य विस्तारणं कर्तुम् इच्छति । तदर्थं बहु धनम् आवश्यकम् । अतः भवान् साहाय्यरूपेण प्रभूतं धनं ददातु । अहम् अन्यत् किमपि न इच्छामि'' इति उक्तवान् ।

भगदत्तः अर्जुनाय धनं दत्त्वा नमस्कृतवान् । अर्जुनः एवं राज्ञः जित्वा उपायनानि स्वीकुर्वन् किम्पुरुषान् गन्धर्वान् च पराजित्य कुरुप्रदेशस्य हरिवर्षनामकं किञ्चित् नगरं प्राप्तवान् । तत् नगरमपि जेतुं प्रयत्नं कृतवान् सः । तस्य एतं प्रयत्नं दृष्ट्वा तत्रत्याः द्वारपालकाः - ''एतत् नगरं जेतुं भवान् न शक्नोति । स्वस्य मानरक्षणं कर्तुम् इच्छति चेत् भवान् प्रतिगच्छतु'' इति उक्तवन्तः ।

दीर्घदेहिनः, महावीराः ते द्वारपालकाः स्वस्य नगरस्य वैशिष्ट्यस्य विवरणम् अपि कृतवन्तः - ''एतत् नगरं यः प्रविशति सः किमपि द्रष्टुं न शक्नोति । मानवशरीरेण जेतुम् अशक्यम् अस्ति एतत् नगरम् । भवान् यत् इच्छति तत् याचताम् । दद्मः'' इति उक्तवन्तः च ।

धर्मराजेन क्रियमाणं यागं, साम्राज्य-

विस्तारणाभिलाषां च विवृत्य अर्जुनः धनस्य आवश्यकतां निवेदितवान् । ते राशिरूपेण धनं, वज्रवैढूर्याणि, विशेष-जातीयानां हरिणानां चर्माणि च समर्पितवन्तः । एवम् अर्जुनः स्वेन आनीतं धनराशिं विविधानि वस्तूनि च धनकोषे योजितवान् ।

ससैन्यं प्रस्थितः भीमः अपि पाञ्चाल-राजस्य स्नेहं सम्पाद्य, मिथिलाधिपं मल्लयुद्धे पराजित्य दशार्णवस्य राज्ञः सुधन्वनामकस्य पराक्रमेण प्रभावितः सन् तं स्वस्य सेनाधिपतिं कृतवान् । अनन्तरं रोचमान-नामकं, तदीयान् अनुजान् च पराजित्य चेदिदेशं प्राप्तवान् ।

धर्मराजः साम्राज्यस्य विस्तारणं कर्तुम् इच्छति इति ज्ञात्वा चेदिदेशस्य राजा शिशुपालः सन्तुष्टः अभवत् । सः कानिचन दिनानि यावत् भीमस्य सत्कारं कृत्वा गमनसमये राजसूययागार्थं प्रभूतं धनं दत्त्वा प्रेषितवान् ।

भीमः ततः प्रस्थाय अनेकान् राज्ञः जयन् मगधदेशम् आगतवान् । तद्देशस्य राजतः सहदेवात् विविधानि उपायनानि प्राप्तवान् सः । ततः मगधराजस्य साहाय्येन पौण्ड्रकवासुदेवं, समुद्रतीरवासिनः राजानः च जित्वा सुवर्णं, रजतं, मौक्तिकानि, सुगन्धद्रव्याणि च सम्पाद्य इन्द्रप्रस्थं प्रति गतवान् ।

दक्षिणदिशि गतः सहदेवः शूरसेनं, मत्स्यदेशं, पटच्चरदेशं, निषादीयान् च



जित्वा मातुलस्य कुन्तिभोजस्य गृहं गतवान् । ततः अपि बहुधनं स्वीकृत्य अनेकान् राज्ञः जित्वा माहिष्मतीपुरम् आगतवान् । तत्रत्येन राज्ञा नीलेन सह युद्धकरणसमये सहदेवस्य सैन्यम् अग्नि-ग्रस्तम् अभवत् । यतः पूर्वं माहिष्मती-नगरस्य राजा नीलः अग्निकार्यार्थं पुत्रीं नियोजितवान् आसीत् । अग्निदेवः तस्याः सौन्दर्येण आकृष्टः सन् ब्राह्मणवेषेण तस्याः समीपं गतवान् आसीत् । विषयं ज्ञात्वा नीलः अग्निदेवं भर्त्सितवान् आसीत् । तदा अग्निः मूलरूपं धृत्वा आत्मानं प्रकटितवान् आसीत् । नीलः अग्निदेवं साष्टाङ्गं प्रणम्य 'क्षाम्यतु' इति प्रार्थितवान् आसीत् । अनन्तरं शास्त्रोक्तरीत्या अग्निदेवेन सह

विवाहं निर्वर्तितवान् आसीत् । स्वस्य, स्वस्य नगरस्य च अग्निभयं यथा न स्यात् तथा अग्निदेवात् अभयं प्राप्तवान् आसीत् नीलः । तदारभ्य माहिष्मतीनगरं प्रति शत्रवः आगच्छन्ति चेत् तान् अग्निदेवः भस्मसात् करोति स्म ।

सहदेवः दर्भासने उपविश्य होमं कृत्वा अग्निदेवं प्रार्थितवान् । प्रसन्नः अग्निदेवः सहदेवनीलयोः सन्धानं कारितवान् । नीलः सहदेवाय बहु धनं दत्त्वा प्रेषितवान् ।

सहदेवः तथैव अग्रे अग्रे गच्छन् कलिङ्गदेशीयान्, ओढ्रान्, केरलीयान्, आन्ध्रीयान् च पराजित्य समुद्रतीरस्य राजानं विभीषणं पराजितवान् । तस्मात् अपि बहु धनं प्राप्य सन्तोषेण इन्द्रप्रस्थं प्रतिगतवान् ।

इन्द्रप्रस्थतः पश्चिमदिशि गतः नकुलः रोहितकदेशस्य राजानं मयूरं पराजित्य ततः अग्रे शैरीषकदेशं महेत्थदेशं च जितवान् । दशार्णः, शिबिः, त्रिगर्तः, अम्बष्ठः, माळवः इत्येतेषां देशानां राजानः पराजयम् अङ्गीकृतवन्तः । एवं निरन्तरं जयं प्राप्नुवन् नकुलः स्वस्य आगमनवार्तां कृष्णाय प्रेषितवान् । ततः मद्रदेशं जित्वा शाकलपुरं च गत्वा मातुलेन शल्येन मिलितवान् । धर्मराजेन क्रियमाणस्य यागस्य विषयं विवृतवान् च । शल्यः महता सन्तोषेण धनं, सुवर्णं, वाहनानि च दत्तवान् ।

नकुलः अनेकान् द्वीपान् जित्वा, वरुणस्य आधीन्ये स्थितं देशं, कृष्णेन पूर्वं जितान् देशान् च जित्वा धनकनकैः सह इन्द्रप्रस्थं प्रत्यागतवान् ।

चतसृषु दिक्षु गत्वा चतुर्भिः अनुजैः आनीतायाः सम्पत्तेः कारणतः धर्मराजस्य कोषागारं पूर्णम् अभवत् । वरुणस्य कुबेरस्य वा यावती सम्पत्तिः भवेत् ततोऽपि अधिका सम्पत्तिः प्राप्ता आसीत् धर्मराजेन । 'एतस्याः सम्पत्तेः आधारेण विना विघ्नं राजसूययागः निर्वर्तयितुं शक्यः' इति चिन्तयन् धर्मराजः गतचिन्तः जातः । तस्य मन्त्रिणः अपि सोत्साहम् उक्तवन्तः यत् राजसूययागं कर्तुम् एषः सुसमयः इति ।



# र स वा र्ताः

## वृक्षाणामपि विवाहः

उपर्युक्ता शीर्षिका विचित्रा इति भाति खलु ? कथम् एतत् साध्यम् इति चिन्तयन्तः सन्ति खलु भवन्तः ? केरलराज्यस्य पालघाट्मण्डले मलक्कुळम् इत्यत्र एषः विवाहः प्राचलत् । अस्मिन् विषये ज्ञातव्यं किञ्चित् अस्ति । सप्तदशवर्षेभ्यः पूर्वं केळन्नामकः कश्चित् कृषिकः आसीत् । 'वेलप्पन्नामकः मुख्याध्यापकः तस्य कृषिकस्य मित्रम् । ग्रामसीमायां वेलप्पन् किञ्चन वटसस्यम् आरोपितवान् । पार्श्वे एव केळन् अपि किञ्चन निम्बसस्यम् आरोपितवान् । उभौ अपि पुत्रवत् वृक्षौ पालयतः स्म । द्वयोः वृक्षयोः विवाहः कारणीयः इति तदा तदा विनोदेन वदतः स्म च । अतः तौ प्रीत्या वृक्षौ वर्धितवन्तौ । दुरदृष्टवशात् ततः त्रयोदशमासानाम् अनन्तरं वेलप्पन् दिवङ्गतः । किन्तु केळन् मित्रेण आरोपितं सस्यं जागरूकः सन् रक्षन् आसीत् । तस्य प्रदेशस्य जनाः, वटवृक्षं शिववत्, निम्बवृक्षं रेणुकावत् (परशुरामस्य माता) च भावयन्ति । अतः मलक्कुळग्रामे अपि जनाः तौ वृक्षौ भक्त्या पूजयन्ति स्म । किन्तु केचन 'एतौ वृक्षौ मार्गे अवरोधरूपेण स्तः' इति चिन्तयन्तः तयोः वृक्षयोः कृन्तनं कर्तुम् इष्टवन्तः । बहवः प्रतिभटनं कृतवन्तः । अनन्तरं केचन द्वयोः वृक्षयोः विवाहः निर्वर्तनीयः इति चिन्तितवन्तः । विवाहदिने वृक्षद्वयमपि पुष्पमालाभिः अलङ्कृतम् आसीत् । अर्चकः पूजादिकं कृत्वा निम्बवृक्षस्य माङ्गल्यधारणं कारितवान् । विवाहस्थले चतुश्शतं जनाः उपस्थिताः आसन् । मित्रस्य इच्छा पूर्णा अभवत् इति कारणतः नितरां सन्तुष्टः अभवत् केळन् ।

## सामान्यानां वाहनम्

चत्वारिंशद्वर्षेभ्यः पूर्वं द्विचक्रिका सामान्यजनानां वाहनत्वेन परिगण्यते स्म । धनिकाः एव कार्यानानां बैक्यानानां च उपयोगं कुर्वन्ति स्म । अनन्तरकाले न्यूनमूल्यस्य लघुकार्यानानि प्रसिद्धानि अभवन् । तथापि द्विचक्रिकाणाम् उत्पादनं तु १९७० तमवर्षतः वर्धमानमेव दृश्यते । १९९४ तमे वर्षे एव आहत्य ११०,०००,००० द्विचक्रिकाः उत्पादिताः । द्विचक्रिकाणाम् उत्पादने भारतस्य द्वितीयं स्थानम् अस्ति ।

द्विचक्रिकाणां निर्माणे आधिक्यस्य कारणद्वयम् एवं भवितुम् अर्हति । एकं तु चालने सौलभ्यम् इति, द्वितीयम् इन्धनं न आवश्यकम् इति च । इन्धनं न आवश्यकम् इति कारणतः वातावरणकालुष्यं वा शब्दकालुष्यं वा द्विचक्रिकोपयोगात् न भवत्येव । केषुचित् देशेषु निश्चिते प्रदेशे इन्धनाधारितवाहनानाम् उपयोगः निषिद्धः अस्ति । विश्वविद्यालयानां परिसरे, उद्योगिनां वसतिसमीपे च एतादृशवाहनानां चालनार्थम् अनुमतिः नास्ति । अमेरिकादेशस्य ४०० नगरेषु आरक्षकाणां कृते, पत्रवितारकाणां कृते च उपयोगाय द्विचक्रिकाः एव दत्ताः सन्ति ।

भारते अपि देहली, पुणे, हैदराबाद् इत्यादिषु स्थानेषु द्विचक्रिकाः एव आधिक्येन दृश्यन्ते ।

## अस्मद्देशीया वृक्षसम्पत्

# कदम्बवृक्षः

कदाचित् विष्णुवाहनः गरुडः अमृतकलशं चञ्च्वा गृहीत्वा स्वर्गतः भूमिं प्रति आनयन् आसीत् । मार्गे विश्रान्त्यर्थं कदम्बवृक्षस्योपरि उपविष्टः सः स्वचञ्चुं वृक्षमूले घर्षितवान् । तदा अमृतस्य केचन बिन्दवः तत्र पतिताः । अतः एव कदम्बवृक्षाः दीर्घकालं यावत् - तन्नाम ३०० वर्षाणि - जीवन्ति इति काचित् कथा पुराणेषु दृश्यते । सुगन्धभरितान् एतान् वृक्षान् बालकृष्णः बहु इच्छति स्म इति श्रूयते । सः वृन्दावने वेणुगानं कुर्वन् कदम्बवृक्षच्छायायां गोपिकाभिः सह विहरति स्म । इतरेषाम् अपेक्षया बहुपूर्वम् एते वृक्षाः पुष्पिताः भवन्ति । एकस्य वृन्तस्य चत्वारि पञ्च वा पुष्पाणि भवन्ति । पर्णाणि कृष्णहरितानि विशालाकारकाणि च भवन्ति ।

समुद्रतीरेषु, हिमालयप्रदेशेषु च कदम्बवृक्षाः बाहुल्येन दृश्यन्ते । संस्कृते, हिन्दिभाषायां, बङ्गाली-भाषायां, गुजराथीभाषायां, मराठीभाषायां च 'कदम्ब-वृक्षः' इत्येव प्रसिद्धः अस्ति एषः वृक्षः ।

कदम्बवृक्षसम्बद्धा अन्या अपि काचित् कथा श्रूयते । कस्यचित् वणिजः गृहस्य प्राङ्गणे कश्चन कदम्बवृक्षः आसीत् । वणिजः सप्त पुत्राः आसन् । कनीयान् पुत्रः सर्वदा वृक्षस्य अधः उपविश्य वेणुगानं करोति स्म । वणिक् कदाचित् वाणिज्यार्थं बहुदूरं गतवान् आसीत् । कनीयसः अनुजस्य विषये कुपिताः अग्रजाः कदम्बवृक्षं छिन्नवन्तः । तदा सः कनीयान् वेणुगानं कुर्वन् समीपस्थम् अरण्यं गतवान् । पिता यदा आगतवान् तदा प्रवृत्तं सर्वं ज्ञात्वा दुःखितवान् । तदारभ्य वणिजः सम्पत् क्षीणतां गता । कदाचित् वणिजः स्वप्ने कुलदेवता प्रत्यक्षीभूय - "सप्तमः पुत्रः प्रत्यागमिष्यति चेत् एव भवान् पुनः सम्पदं प्राप्सति" इति उक्तवती ।

तदा वणिक् स्वयं गत्वा पुत्रम् अन्विष्य आनीतवान् । पुत्रः यदा वेणुगानं कृतवान् तदा वृक्षः पल्लवितः अभवत् । वणिक् पूर्ववत् धनिकः भूत्वा सुखेन कालं यापितवान् ।



अस्मद्देशीयाः ऋषयः

# सत्यकामजाबालः

अरण्ये काचित् नदी प्रवहति स्म । नद्याः पश्चिमतीरे गौतममुनेः आश्रमः आसीत् । गौतममुनिः तत्र केषाञ्चन शिष्याणां पाठनं करोति स्म । विद्याभ्यासार्थं बहुदूरस्थेभ्यः स्थानेभ्यः आगताः शिष्याः गुरुकुले निवसन्ति स्म ।

सर्वेऽपि शिष्याः प्रतिदिनं सूर्योदयतः पूर्वमेव उत्थाय स्नानादिकं समाप्य श्रद्धया सूर्यं नमस्कुर्वन्ति स्म । ततः गुरुणा सह एकाग्रचित्ततया मन्त्रपठनं कुर्वन्ति स्म च ।

नद्याः पूर्वदिशः कश्चित् लघुबालकः प्रतिदिनं तत् दृश्यं पश्यति स्म । तस्य नाम सत्यकामः इति । सः मात्रा जबालया सह कस्मिंश्चित् कुटीरे वसति स्म । जबाला अरण्यं गत्वा शुष्ककाष्ठानि सङ्गृह्य विक्रीय उपजीविकां निर्वहति स्म ।

कदाचित् सत्यकामः स्नानार्थं नदीं गतः आसीत् । तदा सः नद्याः अपरस्मिन् तीरे अध्ययनमग्नान् छात्रान् दृष्टवान् । तान् दृष्टवतः तस्य मनसि अध्ययनेच्छा जागरिता अभवत् ।

अतः सः गृहं प्रत्यागत्य मातरं पृष्टवान् - "अम्ब, तैः बालैः सह अहम् अपि विद्याभ्यासं कर्तुम् इच्छामि । किं



करवाणि ?'' इति ।

''गत्वा तं मुनिम् एव पृच्छतु'' इति उक्तवती जबाला ।

अनन्तरदिने सत्यकामः नदीं तीर्त्वा आश्रमं प्राप्य मुनिं नमस्कृत्य - ''मुनिवर्य, मां भवतः शिष्यत्वेन स्वीकृत्य विद्याभ्यासं कारयतु कृपया'' इति प्रार्थितवान् ।

''भवतः कुलगोत्रादिकं वदतु वत्स !'' इति उक्तवान् मुनिः ।

''अहं न जानामि, गुरुवर्य'' इति उक्तवान् सत्यकामः ।

तदा मुनिः - ''भवतः पितुः नाम किम् ?'' इति पृष्टवान् ।

सत्यकामः - ''तदपि न जानामि, मुनिवर्य । अहं मात्रा सह वसामि । अहं पितरं कदापि न दृष्टवान् एव'' इति उक्तवान् ।

तदा मुनिः - ''तर्हि भवान् मातरं पृष्ट्वा 'पिता कः' इति ज्ञात्वा आगच्छतु'' इति उक्तवान् ।

सत्यकामः गृहं प्रत्यागत्य तान् एव प्रश्नान् मातरं पृष्टवान् । क्षणं यावत् मौनम् आश्रित्य जबाला - ''पुत्र, पूर्वम् अहं सेविकात्वेन बहुत्र कार्यं कृतवती । तथा कार्यकरणसमये कञ्चित् पुरुषं वृतवती । दुरदृष्टवशात् सः तदीयाः कुटुम्बजनाः च कस्मिंश्चित् अपघाते दिवङ्गताः । अहं तं ग्रामं परित्यज्य अत्र आगतवती । भवतः जन्म अत्रैव अभवत् । अतः अहं पत्युः नाम अपि न ज्ञातवती'' इति उक्तवती ।



ततः सत्यकामः आश्रमं गत्वा मात्रा उक्तं सर्वं प्रामाणिकतया मुनेः पुरतः विवृतवान् । सर्वं श्रुत्वा मुनिः मन्दहासपूर्वकं - ''सर्वदा यः सत्यं वदति सः एव ब्राह्मणः । सत्यम् उक्तवान् इत्यतः भवान् ब्राह्मणः एव'' इति आशीर्वादं कृतवान् ।

सत्यकामजाबालः मुनेः सकाशात् वेदाध्ययनं कुर्वन् उत्तमशिष्यः इति कीर्तिं प्राप्तवान् । गच्छता कालेन उत्तमः गुरुः इत्यपि सः प्रख्यातः अभवत् ।

वेदकाले जन्मना केवलं न, गुणैः अपि जातिनिर्णयः क्रियते स्म इत्येषः विषयः सत्यकामस्य एतया कथया प्रमाणितः भवति ।

# भवन्तः जानन्ति वा ?

१. नमीबियादेशस्य पूर्वतनं नाम किम् ?
२. क्रि. श. ५० तमे वर्षे भारते क्रैस्तमतस्य प्रचारः केन कृतः ?
३. इतिहासे प्रमुखस्थानं प्राप्तवती ईजिप्ट्राज्ञी क्लियोपात्रा ईजिप्ट्देशीया न । तर्हि सा कुत्रत्या ?
४. ब्याड्मिण्टन्क्रीडायाः पूर्वतनं नाम किम् ?
५. यहूदीयानां पवित्रः ग्रन्थः कः ?
६. अस्माकं देशे ऐदम्प्राथम्येन संयोजितस्य 'पोलोक्लब्'इत्येतस्य सङ्घस्य नाम किम् ? तस्य संयोजनं कदा कृतम् ?
७. द्वितीयजागतिकयुद्धसमये इटलीदेशस्य नियन्त्रकः कः आसीत् ?
८. भारते क्रीडायां प्रावीण्यं प्राप्तवद्भ्यः कः पुरस्कारः दीयते ?
९. ऐदम्प्राथम्येन 'ओलिम्पियाड्' कुत्र प्राचलत् ? आधुनिकाः ओलिम्पिक्क्रीडाः कुत्र आरब्धाः ?
१०. नश्यमानाः कशेरुकयुक्तप्राणिनः भारतदेशस्य कस्मिन् राज्ये सन्ति ?
११. सर्वेषां वर्णानाम् आधारभूताः त्रयः वर्णाः के ?
१२. प्रजानां द्वारा 'मानवजातेः संरक्षकः' इति कीर्तिं प्राप्तवतः मोगलचक्रवर्तिनः नाम किम् ?
१३. भूमितः प्रस्थितैः मनुष्यैः ऐदम्प्राथम्येन अन्तरिक्षे कदा समावेशः कृतः आसीत् ?
१४. रशियादेशीयस्य सुप्रसिद्धलेखकस्य कौण्ट् लियो-टाल्स्टाय्वर्यस्य जन्मस्थानं किम् ?
१५. क्रि. श. १८२६ तमे वर्षे जुलैमासस्य चतुर्थदिनाङ्के अमेरिकादेशस्य कौ द्वौ अध्यक्षौ मरणं प्राप्तवन्तौ ?
१६. भारते राज्यानां पुनर्विभागः कदा अभवत् ?
१७. यूरोपखण्डस्य सुदीर्घायाः नद्याः नाम किम् ?
१८. धूमशकटानां कोच्निर्मात्री 'इण्टिग्रेल् कोच् फ्याक्टरी'नामिका संस्था कुत्र अस्ति ?

## उत्तराणि

१. नैर्ऋत्य-आफ्रिका इति ।
२. सेण्ट् थामस्वर्येण ।
३. ग्रीस्देशस्य मेसिडोनियाप्रदेशीया ।
४. पुणे इति ।
५. टोरा इति ।
६. काचर्क्लब् इति । तत् अस्सांराज्ये अस्ति ।
७. बेनिटो मुस्सोलिनि ।
८. अर्जुनपुरस्कारः ।
९. क्रि. पू. ७७६ तमे वर्षे । 'आधुनिक-ओलम्पिक् क्रीडाः अथेन्स्मध्ये १८९६ तमे वर्षे ।
१०. हिमालयप्रदेशे ।
११. रक्तः, नीलः, हरितश्च ।
१२. अक्बर् इति ।
१३. क्रि. श. १९१६ तमे वर्षे । डिसेम्बर्मासे १५ दिनाङ्के ।
१४. यास्नया पोलियाना इति प्रदेशः ।
१५. जान् आडम्स्, थामस् जाफर्सन् च ।
१६. १९५६ तमे वर्षे ।
१७. ओल्गा इति ।
१८. मद्रासनगरस्थे पेरम्बूरप्रदेशे ।



# महावीरस्य श्रेष्ठता

पूर्वं विन्ध्यराज्ये चन्द्रसेनः नाम राजा आसीत् । तस्य पुत्री पद्मावती अतीव सुन्दरी आसीत् । यदा सा प्राप्तवयस्का जाता तदा राजा तस्याः विवाहार्थं वरान्वेषणम् आरब्धवान् । तस्मिन् एव समये कदाचित् राजकुमारी अदृश्या अभवत् । सर्वे सैनिकाः, सेवकाः च अन्तःपुरस्य कोणे कोणे राजकुमार्याः अन्वेषणं कृतवन्तः । परन्तु सा कुत्रापि न दृष्टा एव ।

तदा राजपुरोहितः पञ्चाङ्गं दृष्ट्वा उक्तवान् - ''राजकुमारीं पद्मावतीं कश्चन ब्रह्मराक्षसः अपहृत्य नीतवान् अस्ति । सः भयङ्करे अरण्ये अभेद्ये दुर्गे अस्ति । महाशक्तिशाली अस्ति सः । मासत्रयानन्तरं कदाचित् सः राजकुमारीं परिणेष्यति'' इति ।

एतत् श्रुत्वा राजा राज्ञी च चिन्ताक्रान्तौ । तयोः किङ्कर्तव्यतामूढतां दृष्ट्वा महामन्त्री पुरोहितम् उक्तवान् - ''आचार्य ! राजकुमारीम् अन्वेष्टुं के मार्गाः सन्ति इति भवता एव वक्तव्यम्'' इति ।

तदा पुरोहितः शिरः चालयन् - ''यत् प्रवृत्तं, यत् प्रवर्तिष्यते च तत् अञ्जनद्वारा ज्ञात्वा वक्तुं शक्नोमि अहम् । इदानीम् अपि मया अञ्जनद्वारा एव वस्तुस्थितिः ज्ञाता । किन्तु राजकुमार्याः अन्वेषणोपायः तु अञ्जनद्वारा ज्ञातुं न शक्यते'' इति उक्तवान् ।

एतत् श्रुत्वा मन्त्री महाराजम् उक्तवान् - ''महाराज ! व्याकुलताप्राप्त्या न किमपि प्रयोजनम् । राजकुमारी राक्षसात् कथं रक्षणीया इति चिन्तयाम । यः राजकुमारीं राक्षसात् रक्षति तस्मै राजकुमारी दीयते इति उद्घोषणं कारयाम'' इति ।

मन्त्रिणः प्रस्तावम् अङ्गीकृतवान् राजा चन्द्रसेनः तदनुगुणं राज्ये सडिण्डिमघोषं



वार्ता प्रसारितवान् । एतत् श्रुत्वा राज्ये विद्यमानाः बहवः वीराः भयङ्करारण्यं प्रति प्रस्थितवन्तः । भयङ्करं तत् अरण्यं दुष्प्रवेश्यम् आसीत् । अरण्यस्य अन्तः गमनार्थम् एकः एव मार्गः आसीत् । विन्ध्यराज्यस्य महावीरः नाम कश्चित् युवकः सर्वप्रथमम् अरण्यप्रवेशमार्गं प्राप्य तत्र आगतान् अन्यान् वीरान् उद्दिश्य उक्तवान् - ''ब्रह्मराक्षसेन सह युद्धकरणं न सुलभसाध्यम् । येषां धैर्यम् अस्ति ते मया सह युद्धं कृत्वा जयं प्राप्य अन्तः प्रविशन्तु नाम'' इति ।

ततः महावीरस्य अन्यवीराणां च युद्धं प्रवृत्तम् । परन्तु एकः अपि वीरः महावीरं पराजेतुं न शक्तवान् । अन्ये अपि वीराः एतां वार्तां श्रुतवन्तः इति कारणतः तत्र आगन्तॄणां वीराणां संख्या एव न्यूना जाता ।

अत्रान्तरे गुप्तचराणां द्वारा महाराजः श्रुतवान् - ''महावीरस्य पिता पूर्वं विन्ध्यराज्यस्य एव सैन्ये आसीत् । युद्धं कुर्वन्नेव सः मरणं प्राप्तवान् आसीत् । अनन्तरं महावीरः किञ्चित्कालपर्यन्तं देशं त्यक्त्वा कुत्रचित् गत्वा विभिन्नविद्याः ज्ञात्वा महाशक्तिशाली सन् प्रत्यागतः अस्ति'' इति ।

चन्द्रसेनः महावीरस्य मात्रा सह सम्भाषणं कर्तुम् इच्छन् स्वयमेव तस्याः गृहं गतवान् । गृहम् आगतवन्तं महाराजं दृष्ट्वा सा माता आश्चर्यचकिता ।

''भवत्याः पुत्रः राजद्रोहकार्यं कुर्वन्नस्ति । तस्य कारणं ज्ञातुम् अहम् आगतः अस्मि'' इति महाराजः गाम्भीर्येण ताम् उक्तवान् ।

तदा महावीरस्य माता उक्तवती - ''महाराज ! अस्माकं राजभक्तवंशः अस्ति । वयं देशद्रोहं कदापि न कुर्मः । प्राणान् पणीकृत्य देशार्थं युद्धकरणम् अस्माकं धर्मः । एवं स्थिते महावीरः कथं वा देशद्रोहं कुर्यात् ? भवतः कोपः सर्वथा अस्थाने'' इति ।

महाराजः एतेन उत्तरेण किञ्चिदपि तृप्तिं न प्राप्तवान् । सः पृष्टवान् - ''यदि सः वास्तविकः देशभक्तः एव स्यात् तर्हि भयङ्करे अरण्ये ब्रह्मराक्षसेन सह ये युद्धं कर्तुं गच्छन्ति तेषाम् अवरोधं किमर्थम्

अकरिष्यत् ?'' इति ।

एतत् श्रुत्वा महावीरस्य माता आश्चर्यचकिता सती - ''महाराज ! मम पुत्रः अतीवशक्तिशाली । तं पराजेतुम् अस्मिन् जगति कोऽपि न शक्नोति । सः सर्वत्र अटित्वा महाशक्तिं सम्पादितवान् अस्ति । सः ब्रह्मराक्षसेन सह युद्धं कर्तुं मम आशीर्वादं प्राप्य गतवान् अस्ति । किन्तु इदानीं भवान् तु अन्याम् एव वार्तां श्रावयन् अस्ति । अहो आश्चर्यम् !'' इति विषादेन उक्तवती ।

चन्द्रसेनः तस्याः वचने विश्वसितवान् । ततः सः राजभवनं गत्वा मन्त्रिभिः सह चर्चितवान् । मन्त्री किञ्चित् चिन्तयित्वा - ''एतावत्पर्यन्तम् अस्माकं देशे कोऽपि वीरः महावीरं पराजेतुं न शक्तवान् । एतस्मात् एतत् तु निश्चितं यत् सः अतीवशक्तिशाली एव इति । अतः एकवारं वयं तस्य मेलनं करवाम । परन्तु वेषपरिवर्तनं कृत्वा वयं गच्छाम'' इति उक्तवान् ।

महाराजः मन्त्री च ग्रामस्य निर्धनकृषिकस्य वेषं धृत्वा भयङ्करारण्यस्य मुखद्वारस्य समीपं गतवन्तौ । तत्र ताभ्यां गम्भीराकारकः महावीरः दृष्टः ।

महाराजः तस्य समीपं गत्वा कुतूहलेन पृष्टवान् - ''वीरवर ! भवान् अत्र किं करोति ?'' इति

तदा महावीरः उक्तवान् - ''अहं विन्ध्यराज्यस्य वीराणां परीक्षां कुर्वन् अस्मि'' इति ।




''वस्तुतस्तु तादृशं कार्यं महाराजेन वा, सेनाधिपतिना वा करणीयं खलु ? न तु भवता ?'' इति महाराजः उक्तवान् ।

तदा महावीरः उत्तरितवान् - ''अस्मिन् अरण्ये ब्रह्मराक्षसः अस्ति । सः अतीवशक्तिशाली । तेन सह युद्धं कर्तुं सामान्यैः न शक्यते । स्वसमीपं ये आगच्छन्ति तान् खादति सः राक्षसः । अतः वीरान् मरणात् रक्षितुम् अहम् एवं कुर्वन्नस्मि'' इति ।

''कदाचित् अन्येषु वीरेषु कश्चित् ब्रह्मराक्षसं मारयितुं शक्नुयात् एव । कोऽपि राक्षसं मारयितुं न शक्नोति इति भवान् कथं वदति ?'' इति पृष्टवान् महाराजः ।

एतत् श्रुत्वा महावीरः हसन् उक्तवान् -



"ये वीराः मामेव पराजेतुं न शक्तवन्तः ते पुनः ब्रह्मराक्षसं पराजेतुं सर्वथा न शक्नुयुः इति तु लोकज्ञानवद्भिः ज्ञातुं शक्यते एव" इति ।

महाराजः महावीरस्य वचनम् अङ्गीकुर्वन् पुनः पृष्टवान् - "तत् तु सत्यम् । एवं तर्हि ब्रह्मराक्षसस्य पराजयं कर्तुम् अस्मिन् राज्ये कोऽपि किं नास्ति एव ?" इति ।

"किमर्थं नास्ति ? अहमेव कर्तुं शक्नोमि खलु" इति महावीरः साभिमानम् उक्तवान् ।

तदा महाराजः पृष्टवान् - "तर्हि किं विलम्बेन ? भवान् युद्धं करोतु । अत्र मुखद्वारे स्थित्वा सर्वैः सह युद्धकरणेन किं प्रयोजनम् ?" इति ।

"तथा एव कर्तुम् अशक्यम् । परन्तु अस्माकं महाराजस्य कारणतः मम महती समस्या आगता अस्ति" इति वदन् स्वस्य कथां विस्तरेण उक्तवान् महावीरः -

"मम पिता चण्डसेनः युद्धे यदा मृतः तदा अहं पञ्चवर्षीयः आसम् । मम माता प्रतिदिनं मम पितुः पराक्रमं वर्णयन्ती - 'तादृशः महावीरः एव युद्धे अनाथः इव मृतः । अतः भवान् युद्धे मरणम् एव यथा न भवेत् तथा अपूर्वशक्तिं सम्पादयतु' इति वदति स्म । एतत् वचनं मनसि निधाय अहं बाल्यात् एव युद्धविद्याः अभ्यस्तवान् । मम षोडशे वयसि अहं मातरम् उक्तवान् यत् - अहं हिमालयं गत्वा तत्रत्यमुनीनां सेवां कृत्वा मन्त्रविद्यां ज्ञात्वा आगमिष्यामि । भवती आशीर्वादं करोतु इति । ततः मातुः आशीर्वादं प्राप्य अहं हिमालयं गतवान् ।

हिमालये कश्चित् मुनिः मन्त्रतन्त्रादिकं मां बोधयित्वा मम इच्छां पूरयित्वा उक्तवान् - "पुत्र ! एतस्यां भूमौ भवन्तं सम्मुखीकर्तुं कस्यापि शक्तिः न भविष्यति । अग्रे ऐदम्प्राथम्येन यदा भवान् मानवेतरशक्तिं सम्मुखीकर्तुम् उद्युक्तः भविष्यति तदा आदौ भवता मातुः आशीर्वादः स्वीकरणीयः । तथा कृतं चेत् कोऽपि भवतः अवरोधं न करिष्यति" इति ।

ततः मम प्रत्यागमनसमये चोराणां गणः मिलितः । समीपे विद्यमाने ग्रामे चन्द्रिका नाम सुन्दरी युवतिः आसीत् । तां चोरनायकः परिणेतुम् इष्टवान् । विवाहं

कारयितुं पुरोहितं नयन्तः आसन् चोराः । ते विंशतिः जनाः आसन् । तान् धैर्येण सम्मुखीकुर्वन् अहं जयं प्राप्तवान् । ते ततः पलायितवन्तः । तदा चन्द्रिकायाः पिता माम् उक्तवान् - "महावीर ! विवाहार्थं यदा मम पुत्री गृहं त्यक्तवती तदा एव सा परकीया अभवत् । तस्याः विवाहम् असम्पाद्य ग्रामं प्रतिगन्तुम् अहं न शक्नोमि । अतः भवान् एव चन्द्रिकां परिणयतु" इति । चन्द्रिका अपि माम् इष्टवती । अतः अहं तां परिणीतवान् । अनन्तरम् आवाम् उभौ अपि विन्ध्यराज्यं प्रति प्रस्थितवन्तौ । मार्गे कश्चित् ब्रह्मराक्षसः मिलितः । "एषा युवतिः सुन्दरी अस्ति । अहम् एतां मम वासस्थानं नयामि । यदि भवतः शक्तिः अस्ति तर्हि मम प्रयत्नं निवारयतु तावत् भवान्" इति सः उक्तवान् ।

मातुः आशीर्वादं विना ऐदम्प्राथम्येन मानवेतरशक्तेः सम्मुखीकरणं सर्वथा न शक्यते इत्येतत् मुनेः वचनम् अहं स्मृतवान् । अतः अहं राक्षसम् उक्तवान् - "अहं भवता सह युद्धं कर्तुं सिद्धः एव । परन्तु तदर्थं किञ्चित् कालावकाशः अपेक्ष्यते" इति ।

तदा राक्षसः उच्चैः हसन् - "अग्रे कदाचित् अहम् अष्ट युवतीः युगपत् परिणेष्यामि । यदि भवतः शक्तिः स्यात् तर्हि ततः पूर्वम् आगत्य भवान् मां जेतुं प्रयत्नं कर्तुम् अर्हति" इति उक्त्वा चन्द्रिकां गृहीत्वा ततः अदृश्यः अभवत् ।

अनन्तरम् अहं विन्ध्यराज्यं प्राप्य 'माता



उद्विग्ना भवेत्' इति कारणतः विवाहविषयम् अनुक्त्वा 'ब्रह्मराक्षसं सम्मुखीकर्तुं गच्छन् अस्मि' इति एतावत् एव उक्त्वा मातुः आशीर्वादं प्राप्य प्रस्थितवान् । तस्मिन् समये एव महाराजः उद्घोषणं कारितवान् । तं विषयं ज्ञातवतः मम मनसि इदानीं भ्रमः उत्पन्नः अस्ति'' इति ।

तदा राजा पृष्टवान् - ''भोः वीरवर ! अत्र किमर्थं भ्रमः भवतः ? भवान् यत् इष्टवान् तदेव खलु महाराजः कृतवान् ?'' इति ।

''ब्रह्मराक्षसः मारितः चेत् मया अनन्यगतिकतया राजकुमारी परिणेतव्या एव भविष्यति । परन्तु इदानीमेव मम विवाहः जातः अस्ति । अहम् एकपत्नीव्रतस्थः अस्मि अपि'' इति महावीरः उक्तवान् ।

महावीरस्य प्रामाणिकतां, धैर्यं, साहसं च दृष्ट्वा आश्चर्यं प्राप्तवान् राजा पृष्टवान् - ''किमर्थम् एतावति लघुविषये कष्टम् अनुभवति भवान् ? यदि एतं विषयं भवान् महाराजं वदेत् तर्हि सः समस्यायाः परिहारस्य मार्गं सूचयेत् एव खलु ?'' इति ।

''तत् तु सत्यम् । परन्तु मम आशा आसीत् यत् विन्ध्यराज्ये कोऽपि वीरः स्यात् एव, सः राजकुमारीम् अवश्यं रक्षेत् इति । एषा आशा इदानीम् अपि जागर्ति मम मनसि'' इति महावीरः उक्तवान् ।

महाराजः महावीरस्य विनयशीलतां दृष्ट्वा इतोऽपि सन्तुष्टः सन् स्वस्य परिचयम् उक्तवान् । अनन्तरं महाराजः नियमस्य परिवर्तनं कृत्वा 'राजकुमारीं यः रक्षति तस्मै सः यत् इच्छति तत् दीयते' इति उद्घोषणं कारितवान् ।

अनन्तरं केषुचित् एव दिनेषु महावीरः ब्रह्मराक्षसं मारयित्वा स्वपत्नीं, राजकुमारीं च रक्षित्वा राजधानीम् आगतवान् । एतस्मात् कारणात् महाराजः सन्तुष्टः सन् महावीरं स्वस्य सैन्यस्य उन्नते स्थाने नियोज्य यथायोग्यं सत्कृतवान् ।





# रामराजस्य बुद्धिमत्ता

श्रीरङ्गपुरस्य समीपे "वज्राणां खनिः अस्ति" इति वार्ता प्रसृता । सर्वाभ्यः दिग्भ्यः वज्रपरीक्षकाः तत्र आगताः । कर्मकराः चापि आगताः । अतः तत्र गृहाणाम् अभावः विशेषतः उत्पन्नः ।

एवं स्थिते रामराजः नाम कश्चित् तं ग्रामम् आगतवान् । भाटकगृहान्वेषणार्थं सः बहुधा अटितवान् । किञ्चन गृहं रिक्तम् अस्ति इति ज्ञातवान् सः गृहस्वामिना मिलितवान् । गृहस्वामी - "भवता भाटक-रूपेण पञ्चशतं रूप्यकाणि दातव्यानि । वर्षानन्तरं गृहं रिक्तीकरणीयं च" इति उक्तवान् ।

एषः प्रस्तावः रामराजाय न अरोचत । अतः सः गृहस्वामिनं पृष्टवान् - "अहो, विचित्रम् एतत् ! अनुचितम् एतत् ! भवतु । मम कश्चन सन्देहः अस्ति । वर्षानन्तरं यदि गृहं रिक्तं न करिष्यामि तर्हि किं करिष्यति भवान् ?" इति ।

"मम कथने अनौचित्यं किम् अस्ति ? ममापि गृहस्य आवश्यकता कदा भवेत् इति वक्तुं न शक्नोमि । मम ज्येष्ठः जामाता सकुटुम्बम् अत्र आगन्तुम् इच्छति इति वार्ता । वासनियमः न कृतः चेत् ये गृहे वसन्ति ते मया सूचिते समये गृहं रिक्तं न कुर्युः । अतः मया वाससम्बद्धस्य सन्धेः प्रस्तावः कृतः । आवयोः सन्धिः अपि लिपिबद्धः भवतु । वर्षानन्तरं भवता सन्ध्यनुगुणं गृहं न परित्यक्तं चेत् प्रतिमासं द्विसहस्रं रूप्यकाणि दातव्यानि भविष्यन्ति" इति उक्तवान् गृहस्वामी ।

तदा रामराजः किञ्चिदिव कोपेन - "भवतः कथनात् ज्ञायते यत् जामाता वर्षाभ्यन्तरे न आगच्छेत् इति । वर्षं यावत् तु अहं वासं करिष्यामि । वर्षानन्तरं यदि गृहस्य आवश्यकता भवतः न भवेत् तर्हि



पुनश्च भवान् एतत् गृहं भाटकार्थं मह्यम् एव दास्यति वा ?'' इति पृष्टवान् ।

तदा गृहस्वामी - ''आनन्देन दास्यामि । किन्तु नूतनः सन्धिः रचनीयः भविष्यति'' इति उक्तवान् । अनन्यगतिकतया रामराजः एतं नियमम् अङ्गीकृतवान् । ततः सन्धिपत्रं सज्जीकृतम् ।

अनन्तरं रामराजः पत्नीपुत्रैः सह तत्र वासम् आरब्धवान् । नव मासाः अतीताः । कदाचित् गृहस्वामी रामराजसमीपम् आगत्य उक्तवान् - ''भवान् प्रतिमासं समये भाटकं ददाति । अतः अहं सन्तुष्टः अस्मि'' इति ।

रामराजः अपि - ''एतादृशं सुन्दरं गृहं भाटकार्थं प्राप्तवान् अहम् अपि सन्तुष्टः अस्मि । अत्र एव स्थातव्यम् इति मम इच्छा'' इति उक्तवान् ।

''आवयोः सन्धेः नियमं स्मरति खलु भवान् ?'' इति पृष्टवान् गृहस्वामी ।

''स्मरामि एव । यदि भवतः वासार्थम् एव एतत् गृहम् आवश्यकं भवेत्, यदि वा भवतः जामाता वासार्थम् अत्र आगच्छेत् तर्हि एव खलु मया गृहं परित्यक्तव्यम् ? इदानीं तु तादृशी स्थितिः नास्ति । अतः मया गृहं परित्यक्तव्यम् अपि नास्ति'' इति उक्तवान् रामराजः ।

''वर्षात्मकस्य कालस्य निमित्तं पञ्चशतरूप्यकात्मकं भाटकं निश्चितम् आसीत् । सन्धौ प्रस्तावितः कालः आगामिमासे समाप्तिं गमिष्यति । अनन्तरम् अपि भवान् अत्रैव वासं कर्तुम् इच्छति चेत् नूतनः सन्धिः अङ्गीकरणीयः । अग्रिमे वर्षे प्रतिमासं षट्शतं रूप्यकाणि दातव्यानि । तदनुगुणं नूतनं सन्धिपत्रं लिखित्वा दातव्यं च'' इति उक्तवान् गृहस्वामी ।

एतत् श्रुत्वा नितरां दिग्भ्रान्तः रामराजः कोपेन - ''एतत् अन्याय्यम् । अहो, एकवर्षाभ्यन्तरे एव भाटके शतरूप्यकात्मिका वृद्धिः !! किम् एतत् उचितम् ? कृपया पञ्चविंशतिरूप्यकाणि केवलं वर्धयतु । एतेन लोके न्यायः इतोऽपि जीवति इत्येतत् प्रमाणीकृतं भवति । अन्यथा भाटकं कथं न्यूनीकारणीयम् इति अहं जानामि एव'' इति उक्तवान् ।

रामराजस्य वचनं श्रुत्वा कुपितः भूस्वामी - ''यत् वक्तव्यम् आसीत् तत्

उक्तवान् अस्मि । इतःपरं भवतः इच्छा'' इति वदन् ततः वेगेन गतवान् ।

गृहस्वामिना सह प्रवृत्तं कलहं श्रुत्वा रामराजस्य पत्नी पतिम् उद्दिश्य - ''किमर्थं वृथा विवादः ? अस्मिन् ग्रामे गृहाणाम् अभावः अस्ति । भाटकं न्यूनं कारयितुं भवान् न शक्नोति । अतः नूतनं सन्धिं करोति चेत् एव वरम्'' इति उक्तवती ।

रामराजः एतत् श्रुत्वा अपि मौनम् आश्रितवान् । वर्षात्मकः कालः अतीतः । ततः - कदाचित् गृहस्वामी रामराजम् उक्तवान् - ''नूतनं सन्धिपत्रं करणीयम् । अन्यथा गृहं वा परित्यक्तव्यम् । उभयम् अपि न क्रियते चेत् प्रतिमासं द्विसहस्रं रूप्यकाणि दातव्यानि भविष्यन्ति'' इति ।

रामराजः न गृहं परित्यक्तवान्, न वा नूतनं सन्धिपत्रं लिखित्वा दत्तवान् । अतः द्वितीयवर्षस्य प्रथमे मासे द्विसहस्रं रूप्यकाणि भाटकरूपेण सः दत्तवान् । द्वितीये मासे षट्शतरूप्यकात्मकस्य भाटकस्य दानम् अङ्गीकुर्वन् सः तदनुगुणं सन्धिपत्रं लिखित्वा दत्तवान् ।

एतत्सर्वं दृष्ट्वा रामराजस्य पत्नी पतिम् उद्दिश्य उक्तवती - ''कथञ्चित् सन्धिपत्रं कारितम् । तत् एव मासात् पूर्वं यदि कारितं स्यात् तर्हि सहस्राधिकचतुश्शतं (१४००) रूप्यकाणि सञ्चितानि अभविष्यन्'' इति ।

पत्न्याः वचनं श्रुत्वा हसन् रामराजः - ''मूर्खा भवती । मम बुद्धिमत्ता कथं ज्ञायेत भवत्या ? पूर्वमेव सन्धिपत्रं यदि कारितं स्यात् तर्हि गृहस्वामी प्रतिमासं शतं रूप्यकाणि अधिकतया प्राप्नुवन् सन्तोषम् अनुभूतवान् स्यात् । किन्तु मया सन्धिपत्रस्य दाने विलम्बः आचरितः इति कारणतः गृहस्वामिना प्रतिमासं प्राप्तव्ये धने १५ शतरूप्यकाणां न्यूनता जाता । प्रतिमासं तावद्धनं न्यूनतया प्राप्यते इत्यतः गृहस्वामिना इदानीं खेदः अनुभूयते । अतः तथा आचरितवान् अहम्'' इति उक्तवान् ।

पत्युः एतादृशीं बुद्धिमत्तां दृष्ट्वा हसनीयं वा रोदनं करणीयं वा इत्येव न ज्ञातवती रामराजस्य पत्नी ।



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकां जुलै - १९९६ मासे प्रकटयिष्यामः ।



S.G. SESHAGIRI



S.G. SESHAGIRI

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मे - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

**'मार्च्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

प्रथमचित्रम् - **सुखसाधनसम्पन्ना निश्चिन्ता इयम् ।**

द्वितीयचित्रम् - **नदीतरणोद्यताः गतचिन्ताः वयम् ।**

प्रेषकः - कण्ठंराजु शिवराम कोटेश्वरराव्, नान्देड्लवारिवीथी, अन्दुकि - ५२३ २०१ (आ. प्र.)


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते)- रू. ६०-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**डाल्टन् एजन्सीस्,** चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास् - ६०० ०२६

**Printed by B.V. REDDI** at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and **Published by B. VISHWANATHA REDDI** on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.